## अनुक्रमणिका



## पुस्तक प्राप्तिस्थान


श्रीजिनदत्तसूरि ज्ञान भंडार.
ठि० गोपिपुरा,
मु० सुरत.

बाबू रूपचंद बडेर.
नं. ११ डफ स्ट्रीट,
मु० कलकत्ता.

भावनगर—आनंद प्रिन्टिंग प्रेस में शेठ देवचंद दामजीने मुद्रित किया ।





## श्रीमती छोटीबाई ओसवाल-कलकत्ता.

जन्म श्रावण शुदि ३ संवत् १९३५.



जैन शासन की उन्नति के लिये उपधान तप आराधन महोत्सव आदि धार्मिक कार्यों में आपने तन, मन और धन का उदारदिल से जो भोग दीया है वह आप का जीवन की उज्वळ यशगाथा है। शेठ कनैयालालजी के माफिक आप ही साहित्य का प्रचार, धार्मिक उन्नति और समाजहित के कार्य में उदारदिल से अपूर्व सेवा बजा रहे है. ।



## ॥ प्रस्तावना ॥

श्रीगूर्जरधराधीशदुर्लभराजसभासमुद्रोल्लासनचंद्रमसा श्रीचांद्रकुलावतंसेन सुविहितवसतिमार्गप्रवर्त्तकेन खरतरविरुदधारकेण विद्वज्जनचक्रवाकनयनानंदनेन श्रीजिनेश्वरसूरिणा सकलभव्योपकाराय षट्स्थानकाख्यं प्रकरणं विरचितमिदम् ।

अस्य प्रकरणग्रंथस्य विनिर्मातारः श्रीमज्जिनेश्वरसूरयः केषां विनेयावतंसा आसन् ? कस्मिन् समये खरतरविरुदं समासादितवन्तः ? काँस्काँश्च निर्मितवन्तो ग्रंथान् ? कदा कतमान् स्वपादपद्मपरागेण जनपदान् मंडयामासुः ? इति जिज्ञासायां संक्षेपाद् अत्र परिचयो दीयते, उपदेशपदटीकाकारकाणां[1] अर्बुदाचलजिनचैत्यवृषभजिनप्रतिष्ठापकाणां श्रीजिनवर्धमानसूरीश्वराणां सुकुमारपादकमलेषु श्रीजिनेश्वरसूरयः तेषां लघुभ्रातरो बुद्धिसागराचार्याः संसारसागरतरणपोतं दीक्षां जगृहुः, ततः अल्पसमयेन सर्वसिद्धान्तमवगाह्य षड्दर्शनशास्त्रपारगा जाताः, अन्यदा श्रीवर्धमानसूरयः श्रीजिनेश्वरबुद्धिसागराद्यष्टादश—साधुभिः परिवृता भूमंडले विहरंतः क्रमशो गूर्जरराष्ट्रे श्रीपत्तननगरं गतवंतः, तत्र च जिनगृहनिवासलंपटाः चैत्यवासिसूराचार्याः आसन्, तैश्चैत्यवासिभिश्च देशांतरागतमुनीनां वसतिमार्गविरोधाय स्वमंतव्यसमर्थनाय च वादाय ते श्रीजिनेश्वरसूरयः उत्तेजिताः, तदानीं श्रीचौलुक्य-

---

१ हारिभद्रीयोपदेशपदटीकाप्रशस्तिप्रान्ते—

**जिनवचनविचारे नित्यमास(स)क्तयोगैः । सुविमलगुणरंध्रैः वर्धमानमुनीन्द्रैः ॥**
**इयमुपदेशपदानां टीका रचिता अनाथबोधाय । पंचाधिकपंचाशद्युक्ते १०५५ संवत्सरसहस्रे ॥** ( जे० भां० सू० )

वंशोद्भवश्रीदुर्लभराजमहाराजसभायां राजमान्यविद्वज्जनसमक्षं चैत्यवासियतीनां श्रीजिनेश्वरसूरिभिः सह वादोऽभूत्, तदा प्रथमं सूराचार्यैः वसतिवासप्रतिषेधकं जिनगृहवाससमर्थकं स्वकपोलकल्पितशास्त्रप्रमाणं दर्शितम्.

अथ श्रीजिनेश्वरसूरिभिः कुमतांधकारनभोमणिशय्यंभवस्वामिविरचितदशवैकालिकसूत्रादिकानां वसतिवासप्रदर्शकं जिनगृहनिवासनिषेधकं च अनेकप्रमाणसंदर्भं दर्शयित्वा तेषां मतं खंडितम्, तदा चैत्याचार्याः प्रत्युत्तरदाने असमर्थाः जाताः, तदानीं चैत्यवासिनां शास्त्रविरुद्धाचारं प्रेक्ष्य श्रीजिनेश्वरसूरीणां जैनसिद्धान्ताविरुद्धाचारदर्शनेन श्रीपत्तनाधीशदुर्लभमहाराजैः ' खरतर ' इति बिरुदं दत्तम् पुनश्च गुरुत्वेनाङ्गीकृतास्ते सूरयः तेन राज्ञा, तदनन्तरं सूरीश्वराणामिलामण्डले विहारं कुर्वतां जिनचंद्राऽभयदेवधनेश्वरसूरिप्रभृतयोऽनेके शिष्या अभूवन् ।

पुनश्च वि० सं० १०८० वर्षे श्रीहारिभद्रीयाष्टकानां वृत्तिं विदधुः सं. १०९२ वर्षे लीलावतीकथां अकुर्वन्, सं. ११०८ वर्षे कथाकोषपंचलिङ्गीपट्स्थानकप्रमाणलक्ष्मादिग्रंथाः रचिताः ।

---

१ " वसइ पगइसेरां " श्रीजिनेश्वरसूरिणोक्तं एवंविधे परगृहे वसंति साधवो न देवगृहे श्रीदुर्लभराजचित्तेऽतीव तत् लग्नं भणितं चाहो यथा खरं[illegible] तथैव ( गण. सा. श )

२ खरत शब्दस्य व्युत्पत्तिः-अतिशयेन खरा सत्यप्रतिज्ञा ये ते खरतराः यद्वा खः सूर्यः तद्वद् राजन्ते निःप्रतिमप्रतिमाप्राग्भारप्रभाभिःप्रतिवादिविद्वज्जनसंसदि ये ते खरा अत एव तरन्ति भवाब्धिमिति तराः खराश्च ते तराश्च खरतराः ।

३ दुर्लभसेनाने थोडीची वर्षं राज्यकेले । त्यांने आपला गुरु श्रीजिनेश्वरसूरीजी म्हणुनहोता त्याचे उपदेशाने जैनधर्माची शिक्षा स्वीकारून् त्या धर्मान्तला मोठा प्रवीण जाल होता इत्यादि । ( गुज. इति. )

प्रान्तसमये विधिपूर्वकं अनशनं कृत्वा स्वर्गं गताः, इत्येवं श्रीजिनेश्वरसूरयः श्रीतीर्थंकरोपदर्शितवसतिमार्गप्रवर्तकाः आसन्, एषां सूरीश्वराणां आजन्म निर्वाणसंवत्सरो न ज्ञायते, किन्तु एषां पूज्यानां निर्मितग्रन्थेभ्यः १०८० संवत्सरसमयेधारामण्डले विहरत आसन् इति ग्रन्थात् अवबुध्यते ।

श्रीजिनेश्वरसूरितः सर्वत्र वसतिवासप्रवर्तितः खरतरगच्छोऽपि प्रसिद्धिं जातः अस्मिन् विषये बहूनि प्रमाणानि प्रसिद्धानि सन्ति तथाऽपि कानिचित् प्रासंगिकानि प्रदर्श्यन्ते—

वि० सं० ११२० तमे वर्षे श्रीअभयदेवसूरिः स्थानाङ्गसूत्रवृत्तिप्रान्ते—

प्रबुद्धप्रतिबंधप्रवक्तृप्रवीणाप्रतिहतप्रवचनार्थप्रधानवाक्–प्रसरस्य सुविहितमुनिजनमुख्यस्य श्रीजिनेश्वराचार्यस्य तदनुजस्य च व्याकरणादिशास्त्रकर्तुः श्रीबुद्धिसागराचार्यस्य इत्यादि ।

वि० सं० ११३९ वर्षे श्रीगुणचंद्रगणिविनिर्मितप्राकृतवीरचरित्रप्रशस्तिप्रान्ते—

भवजलेहि वीइसंभंत भविगसंताण तारणसमत्थो । बोहित्थोव्व महत्थो सिरिजिणेसरो पढमो ॥ ५१ ॥
गुरुभीराओ धवलाओ सुविहिया साहुसंती जाया । हिमवंताओ गंगुव्व निग्गया सयलजणपुज्जा ॥ ५२ ॥

---

१ सुविहित इति खरतरमुनिगणमुख्यः इति उक्तम् ।

२ सुविहितसाधुसंततिः जाता इति वाक्येन खरतरसंततिप्रचलितं इति ध्वनितम्, शोभनं विहितं आचरितं येषां साधुसाध्वीश्रावकाणां ते सुविहिताः, अ. रा. को. ।

सं. ११३२, ११४१, ११६९, १२११, वर्षेषु क्रमशः जन्मदीक्षासूरिपदस्वर्गभाजः श्रीजिनदत्तसूरयः गणधरसार्द्धशतके—

तेसिं पयपउमसेवारसिओ भमरुव्व सव्वभमररहिओ । ससमयपरसमयपयत्थसत्थवित्थारणसमत्थो ॥ ६४ ॥

अणहिल्लवाडए नाडइव्व दंसियसुपत्तसंदोहे । पउरपए बहुकविदूसगे य सन्नायगाणुगए ॥ ६५ ॥

सड्ढियदुल्लहराए सरसइअंकोवसोहिए सुहए । मज्झो–रायसहं पविसिऊण लोयागमाणुमयं ॥ ६६ ॥

नामायरिएहिं समं करियं वियारं वियाररहिएहिं । वसइहिं निवासो साहूणं ठविओ ठाविओ अप्पा ॥ ६७ ॥

सं. ११७१ वर्षे लिखितां कविपल्हविरचितपट्टावल्याम्[1]—

उआयणु तह वद्धमाणु खरतरवरलद्धउ । सुगुरुजिणेसरसूरि नियमि जिणचंदु सुसंजमि ।

वि० सं० १२१०, १२२३, १२७७, वर्षेषु क्रमशः जन्माचार्यपदनिर्वाणभाजः जिनपतिसूरयः संघपट्टकवृत्तिप्रारंभे–

श्रीदुर्लभराजमहाराजसभायां अनल्पजल्पजलधिसमुच्छलदतुच्छविकल्पकल्लोलमालाकवलितबहलप्रतिवादिकोविदमासण्या संविग्नमुनिनिवहाग्रण्या सुविहितवसतिपथप्रथनरविणा वादिकेसरिणा श्रीजिनेश्वरसूरिणा श्रुतियुक्तिभिर्बहुधा चैत्यवासव्यवस्थापनं प्रति प्रतिक्षिप्तेष्वपि लाम्पट्याभिनिवेशाभ्याम् इत्यादि ।

सं. १२८५ श्रीपूर्णभद्रगणिविनिर्मिते धन्यशालिभद्रचरित्रप्रान्ते—

1 सं. ११७१ वर्षे श्रीजिनदत्तसूरीणां शिष्येण ब्रह्मचंद्रगणिना लिखिता ताडपत्रीयप्रतिकृतिः जेसलमीरदुर्गभाण्डागारे अद्याऽपि दृश्यते ।

श्रीमद्गुर्जरभूमिभूपणमणौ श्रीपत्तने पत्तने । श्रीमद्दुर्लभराजराजपुरतो यश्चैत्यवासिद्विपान् ॥
निर्लोड्यागमहेतुयुक्तिनखरैर्वासं गृहस्थालये । साधूनां समतिष्ठपन्मुनिमृगाधीशोऽप्रधृष्यः परैः ॥ १ ॥
सूरिः स चांद्रकुलमानसराजहंसः, श्रीमज्जिनेश्वर इति प्रथितः पृथिव्यां ।
जज्ञे लसच्चरणरागभृदिद्ध-शुद्धपक्षद्वयं शुभगतिं सुतरां दधानः ॥ २ ॥

सं० १२९३ वर्षे द्वादशकुलकविवरणे उपाध्यायः जिनपालः—

श्रीमच्चांद्रकुलांबरैकतरणेः श्रीवर्द्धमानप्रभोः, शिष्यः सूरिजिनेश्वरो मतिवचःप्रागल्भ्यवाचस्पतिः ।
आसीद्दुर्लभराजराजसदसि प्रख्यापितागारवद्-वेश्मान्तस्थितिरागमज्ञसुमुनिव्रातस्य शुद्धात्मनः ॥ १ ॥

सं. १३१७ वर्षे श्रावकधर्मप्रकरणवृत्तिप्रान्ते लक्ष्मीतिलकोपाध्यायः—

पादोपानपहस्त्यकुग्रहकृतान् सिद्धान्तदृष्ट्यावसत्यध्वानं शुभसिद्धिलग्नमभितः प्रामाणिकत्वं नयन् ।
स्थाने दुर्लभराजशक्रगुरुतो प्रापत्सुचन्द्रान्वयो-त्तंसः सूरिजिनेश्वरः समभवत् त्रैविद्यवंद्यक्रमः ॥ १ ॥

सं. १३३४ प्रभावकचरित्रे प्रभाचंद्र.—

जिनेश्वरस्ततः सूरिरपरो बुद्धिसागरः । नामभ्यां विश्रुतौ पूज्यैः विहारेऽनुमतौ तदा ॥ ४२ ॥
श्रीमान् दुर्लभराजाख्यस्तत्र चासीद्विशांपतिः......... ॥ ४७ ॥
ततः प्रभृति संजज्ञे वसतीनां परंपरा............... ॥ ८६ ॥

सं. १४१२ राजगृहगतपार्श्वनाथमंदिरप्रशस्तौ भुवनहितोपाध्यायः—

तदनु भुवनाश्रान्तख्यातावदातगुणोच्चरः सुचरणरमाभूरिः सूरिर्बभूव जिनेश्वरः ।
खरतर इति ख्यातिं यस्मादवाप गणोऽप्ययं परिमल कल्पश्रीप..............ङ्गुगणोऽवनौ ॥ १७ ॥

सं. १४९७ वर्षे जेसलमेरुदुर्गस्थसंभवजिनालयप्रशस्तौ, इतश्च चंद्रकुले श्रीखतरविधिपक्ते—

श्रीवर्धमानाभिधसूरिराजो जातः क्रमादर्बुदपर्वताग्रे ॥
मंत्रीश्वरश्रीविमलाभिधानः प्राचीकरद्यद्वचनेन चैत्यं ॥ १ ॥
अणहिल्लपाटकपुरे यैर्दुर्लभराजपर्षदि विवादे । प्राप्तं खरतरबिरुदं जिनेश्वरास्सूरयो जज्ञुः ॥ २ ॥

सं. १९०१ वर्षे महोपाध्यायश्रीगुणरत्नगणिनिर्मिते षष्टिशतकप्रकरणवृत्तिप्रान्ते—

ततो गुरुजिनेश्वरः स्वरसतोऽपि संवेगवान्, बभूव विधिमार्गविच्च खरतरेत्यभिख्या यतः ।
प्रसिद्धिमगमत् मठाधिपतिसङ्घनिर्लोठना—न्नराधिपतिदुर्लभप्रार्थितपर्षदि प्रस्फुटम् ॥ ३ ॥

सं. १९०२ तपागच्छनायकसोमधर्मगणिनिर्मितोपदेशसप्तत्याम्—

पुरा श्रीपत्तने राज्यं कुर्वाणे भीमभूपतौ । अभूवन् भूतलाख्याताः श्रीजिनेश्वरसूरयः ॥ २ ॥
सूरयोऽभयदेवाख्यास्तेषां पट्टे दिदीपिरे । तेभ्यः प्रतिष्ठामापन्नो गच्छः खरतराभिधः ॥ ३ ॥

सं—१६११ वर्षे श्री गुणविनयवाचकविरचिते सम्बोधसप्ततिवृत्तिप्रान्ते—

दुर्लभराजात् खरतरविरुदमधुश्चैत्यवासिनो जित्वा । विदधुश्च वसतिवासं जिनेश्वरास्तेऽभवंस्तदनु ॥ ४ ॥

इत्यादिभिः प्रमाणैः वसतिवासः प्रकटितः श्रीजिनेश्वरसूरिणा, एवं खरतरविरुदं सम्प्राप्तं च इति प्रकटं ज्ञायते.

अत्र खरतरगणपट्टावल्यादिषु सं० १०८० तमे वर्षे खरतरविरुदं लिखितं तद् असहमानाः केचित् स्वकपोलकल्पितग्रन्थेषु सं० १०८० तमे वर्षे दुर्लभराजो नासीत्, स तु सं० १०६६ तमे वर्षे पत्तने राज्यं प्राप्य सं० १०७८ तमे वर्षे यात्रार्थं गतवान् तदा जिनेश्वरसूरिः दुर्लभराजसभायां कथं खरतरविरुदं प्राप्तवान् इति प्रलपन्ति ऐतिह्यविदः, तत्प्रत्युत्तरमेवम्—

ननु प्रबंधचिंतामणि–विचारश्रेणि–रत्नमाला–रासमाला–राजस्थान–गूर्जरदेशीय–प्राचीनार्वाचीन–इतिहास–ग्रन्थेषु श्रीदुर्लभराज-राज्यप्राप्तिः स्थितिकालश्च विषये वि. सं. १०६५–६६ तः ११–१२–१४ वर्षपर्यन्तं भिन्नमतानि दृश्यंते,

ग्रन्थकारः स्वयमेवाह—' यथा श्रुतं संकलितप्रबन्धैः ( प्र० चिं० ) प्राश्चात्यइतिहासग्रन्थकारस्तु अन्यग्रन्थान् अवलंब्य कथकडचारणादिमुखात् च यथा यथा श्रुतं तथा तथा अनुमीय ग्रथितं ग्रन्थम् एतत्परस्परविरोधभाजान् ग्रन्थान् च अवलंब्य सं० १०८० तमे वर्षे दुर्लभराजो नासीत् इति कथनं न युक्तम्, एषु परस्परलेखविरोधविषयेषु किं सत्यम् ? इति स्वयमेव विलोकनीयम् विचारशीलैः ।

१ ચાવડા વંશનો અનુક્રમ તથા તેની સાલવારી પ્રબંધ ચિંતામણીની જુદી જુદી પ્રતોમાં બે રીતે મળે છે, અને વિચારશ્રેણીમાં ત્રીજી યોજના છે. સમગ્રગ્રંથભાષામાં વાક્ય રચનામાં અવાંતર પ્રબોધની ગોઠવણમાં બધી રીતે શીથલ રચનાવાળો છે. અને પ્રબંધ ચિંતામણીની હાથ પ્રતોની ગડબડ પાઠાંતરો કરતાં પ્રક્ષિપ્તોએ ઉત્પન્ન કરેલી ગડબડથી આ બીજી રીતે ઘણા ઉપયોગી ગ્રંથનું ઐતિહાસિક મૂલ્ય કેટલેક અંશે ઘટી જાય છે. ( તા.–૨૯–૧–૩૩ ) ગુજરાતી પત્રમાંથી પાનું ૧૭૩

श्रीदुर्लभराजजिनेश्वरसूरिविषये विविधग्रन्थादीन् समालोच्य प्रकटिते प्रमाणे तस्मिन् दोषाविष्करणं अस्मद्मतात् किंचिदपि विरुद्धकथनकरणं मत्सर एव केवलः न तु परमार्थः।

पुनरपि गच्छाम्नायानभिज्ञा जल्पंति जिनवल्लभसूरिजिनदत्तसूरिभ्यां खरतरगच्छः प्रवृत्तः इत्यादि, तत्तु असत्यं एव, जिनवल्लभसूरिसमये श्रीवर्द्धमानसूरितः खरतरगणकल्पद्रुमस्य श्रीमधुकरखरतर इति नामाङ्किता प्रथमा शाखा जाता। श्रीजिनदत्तसूरिसमये श्रीजिनशेखरसूरितः श्रीरुद्रपल्लीयेतिनामधेया[1] द्वितीया शाखा अभूत्, इत्यलम् प्रपंचेन।

अथ षट्स्थानकप्रकरणस्य भाष्यकारः श्रीजिनेश्वरसूरिबुद्धिसागरसूर्योः शिष्यः अभयदेवसूरिः स्वयमेव इत्थमाह प्रस्तुतप्रकरणभाष्यप्रान्ते—

मुणिपवरसिरिजिणेसरसूरीहिं अणुग्गहट्ठाए। तप्पायपउमछप्पय मुणीससिरिअभयदेवसूरीहिं ॥ १ ॥
दुसमगममिच्छसुगमं विहियं नियसीसवयणेण ॥

उपाध्यायजिनपालोऽपि प्रस्तुतप्रकरणवृत्तिप्रारंभे—

सत्यपि गम्भीरार्थे, भाष्येऽभयदेवसूरिभिर्ग्रथिते। प्रतिपदमर्थाख्यानान्मम यत्नः सफल एवात्र ॥ २ ॥

इत्यनेन श्रीअभयदेवसूरिणा एव भाष्यं कृतं इति ज्ञायते।

अथ अस्य प्रकरणस्य वृत्तिप्रणेता जिनपतिसूरिशिष्यः जिनपाल उपाध्यायः स्वयमेव इत्थं आह–प्रस्तुतप्रकरणवृत्तिप्रान्ते–जिनपति-

1 एतत्कृतरासानां परिचयो अपभ्रंशकाव्यत्रयीभूमिकायां विलोकनीयः जिज्ञासुभिः ॥

रितिसूरिःसद्गुणागाढवंचैर्निबिडनिगडिते वाऽस्त्येति नो संयमश्री....॥ ६ ॥ तच्छिष्यो जिनपालः षट्स्थानकसंज्ञितप्रकरणस्य । वृत्ति
न्यदधायेव अप्येतां........॥ ८ ॥ युग–रसदिनकर ( १२६२ ) संख्ये विक्रम........॥ १० ॥

एतैः वाक्यैः श्रीजिनपालपाठकपुङ्गवेन जिनपतिसूरेः शिष्यत्वं स्वसत्तासमयश्च प्रतिपादितः स्पष्टतया अपरं च–चर्चरी–द्वादश-कुलक–उपदेशरसायणादिग्रन्थानां वृत्तिः चक्रे ।

श्रीमद्जिनकृपाचंद्रसूरीश्वराः स्वशिष्यप्रशिष्यैः परिवृताः वि. सं. १९८३ तमे वर्षे जेसलमेरदुर्गे चातुर्मासस्थितिं कृतवन्तः, तदानीं श्रीजिनभद्रसूरिसंस्थापितज्ञानभाण्डागारे स्थितानां अतिजीर्णताडपत्रलिखितपुस्तकानां प्रतिकृतयः कारिताः सूरिभिः, तदा श्रीप्रवर्तक-सुखसागरमहाराजोऽपि तद्ग्रन्थसंशोधनकार्यं कुर्वाणः कारयमाणश्च कतिपयान् अमुद्रितदुर्लभांश्च ग्रन्थान्–षट्स्थानक–द्वादशकुलक-धन्यशालिभद्रचरित्रादीनां मुद्रयितुम् ( मुद्रणयन्त्रविषयीकर्तुम् ) इच्छया प्रूफसंज्ञकाः प्रतिकृतयः कारिताः अधुना तु श्रीजिनकृपा-चन्द्रसूरीश्वराणां उपदेशेन बंगालदेशभूभामिनीभालभूषणकालिकातामहानगरीवास्तव्यस्य धर्मज्ञश्रेष्ठिकनैयालाल–ढढेरस्य धर्म-पत्नी श्राविका छोटीबाइ इतिनामिका स्वकीयज्ञानावरणकर्मक्षयोपशमनाय परोपकाराय च एतत्प्रकरणरत्नमुद्रणे द्रव्यसाहाय्यं कृतवती तस्मात् सा धन्या, पठनपाठनादिरूपेण साफल्यं विदधतु सज्जना अपि इति प्रार्थयेयम् ।

प्रस्तुतप्रकरणरत्नस्य संशोधनावसरे प्राचीनार्वाचीनानि एतानि हस्तलिखितानि पुस्तकानि समुपलब्धानि—

प्रथमं अणहिल्लपुरपत्तनस्थभाण्डागारतः श्रीप्रवर्त्तकपदालंकृतश्रीकांतिविजयमहाराजशिष्यमुनिपुङ्गवचतुरविजयशिष्यपुन्यविजय-मुनिवर्याणां अनुपमकृपातः संप्राप्तं प्राचीनं अष्टाविंशतिपत्रात्मकम्, द्वितीयम् वर्धमानकेभ्य ( वढवाणकेभ्य ) स्थितयोगनिष्ट-

पत्तनागर्धीकिमरविजयदेवविजयपुस्तकालयतः महोपाध्यायदेवविजयमहाराजैः आनाय्य प्रदत्तं अर्वाचीनं एकचत्वारिंशत्पत्रात्मकम्, तृतीयं चात्रैव घेवरिआणंदजिकल्याणजिपेढिस्थज्ञानभांडागारतः संप्राप्तं षड्विंशतिपत्रात्मकं श्रीमत्कुंवरजिसाहाय्येन, एतत् प्रकरणभाष्यपुस्तकं तु वटपद्रस्थ ( वडोदरास्थ ) आचार्य श्रीमोहनसूरिज्ञानभाण्डागारतः उपाध्यायश्रीप्रतापविजयमहाराजैः आनाय्य प्रदत्तं नूतनं चतुष्पत्रात्मकम् ।

एवम् पुस्तकत्रयेण संशोधनकर्मणि महत् साहाय्यं जातम् ततस्तेषां पुस्तकसाहाय्यकारकाणां महाशयानां भूरिभूरिधन्यवादप्रदानपुरस्सरं महतीं उपकृतिं स्मृतिपथं नयामः ।

श्रीहेमचन्द्राचार्यपाठशालाध्यापकेन पण्डितअमृतलालमहाशयेन वीरबाईजैनपुस्तकालयकार्यवाहकश्रीमत्पदमसीहीरजीनामधेयेन च प्रस्तावनालेखविषये अनेकपुस्तकावलोकनसाहाय्यं प्रदत्तं तयोः कल्याणं वाञ्छामि,

पुस्तकावलंबनेन विद्वद्वर्यप्रवर्त्तकसुखसागरमहाराजेन सावधानमनसाऽतिपरिश्रमेण संशोधितेऽप्यस्मिन् ग्रन्थे दृष्टिदोषवशात् अक्षरयोजकदोषाद्वा यत्र कुत्रचिदशुद्धयः भवेयुः तत्र कृपां विधाय संशोधनीयम् क्षन्तव्यं क्षमाधनैश्च विद्वद्गुणानुरक्तैः इति प्रार्थयते–

श्रीखरतरगणावतंसकअनेकज्ञानभण्डारधार्मिकविद्यालयोत्पादकश्रीजिनकृपाचन्द्रसूरीश्वरचरणारविंदमधुकरशिष्यरत्नप्रवर्त्तकमुनिसुखसागरमहाराजानां शिष्यः सज्जनकृपाकाङ्क्षी–मंगलसागरो मुनिः ॥ वि. सं. १९९० वर्षे अक्षयतृतीयादिने पादलिप्तपुरे

१ किन्तु अस्य भाष्यग्रन्थस्य एका प्रतिः मिलिता सापि अशुद्धप्रायत्वात् अस्माभिः न मुद्रापिता

॥ अर्हम् ॥

दुर्लभराजसदसीप्राप्तखरतरबिरुद–वसतिमार्गप्रकाशक–श्रीमज्जिनेश्वरसूरिविरचितम्–

# षट्स्थानकप्रकरणम् ।



श्रीमज्जिनपतिसूरिशिष्य–प्रवरपण्डित–श्रीमज्जिनपालविधृतवृत्त्युपेतम्

—•—

धर्मोपदेशनाविधौ रदनोत्थकान्तिः, सान्द्रोद्यती जनतनूर्विशदीचकार ।
अन्तर्विशुद्धिकरगीर्विजिगी*षयेव, यस्य श्रियं जिनपतिस्तनुतात्स वीरः ॥ १ ॥

श्रीमत्सूरिजिनेश्वरेण रचिते षट्स्थानके स्थानके, मुक्तिप्रस्थितभव्यपान्थनिवहस्याध्वव्यवस्थाकृतिः ।
वृत्तिर्मन्दधिया मया प्रकरणे प्रारभ्यतेऽत्रादरात् , संक्षिप्ता सुगुरोरुपासनविधेः प्रासार्थलेशस्पृशा ॥२॥

* जिगीषयैव इति प्रत्यन्तरे ।

सत्यपि गम्भीरार्थे, भाष्येऽभयदेवसूरिभिर्ग्रथिते। प्रतिपदमर्थाख्यानान्मम यत्नः सफल एवात्र ॥३॥

इह हि जगति प्रवरप्रभापटलप्रद्योतितदिक्चक्रवालप्रभावातिशायिरत्नराजि रत्नाकर इव विराजितत्रिजगदुदरान्तर्वर्त्तिपदार्थसार्थव्यवस्थापकप्रमाणोपपन्नस्याद्वादमतकोविदसंविग्नमहामुनिजनसंकुलेऽपि शुक्तिशकलासारप्रामाणिकनानाकुनयदेशकारण्डपाखण्डिमण्डलवचःप्रपञ्चकदर्थ्यमानमानसानां प्रायः प्राणिनां निःस्वानामिव तथाविधप्रवरपुण्यपरंपरापरिपाकविकलानां न भवत्येव सप्रभावा प्रयत्नरत्नैरिव स्याद्वादकोविदसंविग्नैः सद्गुरुभिः सह संपादितातिदारुणभवदारिद्र्योपद्रवविप्रयोगः संप्रयोगः। स हि विध्वंसकः कापथौघानां, मत्तमतङ्गजः संसारगतिवल्लीनां, सुधारससंसिक्तकल्पकन्दः सकलकल्याणफलपरंपराणाम्। तदुक्तम्—"जायइ सुहगुरुजोगो, सहसा सिवलच्छिपत्थियाण धुवं। पावंति जं अधन्ना, न कयावि मणिच्छियं अमयं ॥१॥" तल्लाभमन्तरेण तु भवचक्रभ्रमणमेव संपद्यते। यदुक्तम्—"धम्मायरिएण विणा, अलहंता सिद्धिसाहणोवायं। अरय व्व तुंबलग्गा, भमंति संसारचक्कम्मि ॥१॥" कश्चित्कथंचित्तथाविधभव्यतापरिपाकयोगात् संजातेऽपि तस्मिन् भव्यप्राणिनामसदुपदेशविषप्रदानेन विफलीक्रियमाणे दुर्वारनिष्कारणवैरिणेव पाखण्डिमण्डलेन भगवान् परमकरुणारसपाथोनिधिः कापथशतसंतमसतरुणतरतेजोनिधिर्गूर्जरधराधीशश्रीमद्दुर्लभराजसमक्षं विपक्षविक्षेपपुरस्सरं च

१ जायते शुभगुरुयोगः, सहसा शिवलक्ष्मीप्रस्थितानां ध्रुवम्। प्राप्नुवन्ति यदधन्याः, न कदापि मनइच्छितम् अमृतम् ॥
२ धर्माचार्येण विना, अलभमानाः सिद्धिसाधनोपायम्। अरका इव तुम्बलग्ना, भ्रमन्ति संसारचक्रे ॥

व्यवस्थापितसुविहितजनगृहिसदननिवासः प्रमोदितसंविग्नमुनिजनमनःकुमुदखण्डः प्रवचनमहाप्रासादशिखरोन्नतकनककेतु-दण्डः सत्तर्कागमादिसमस्तविद्यावदातबोधरञ्जितसकलकोविदवरः शिवपथप्रस्थितसंविग्नमुनिजनाग्रेसरः सर्वप्रकारपरित्यक्त-भूरिः श्रीमज्जिनेश्वरसूरिर्भव्यप्राणिगणोपचिकीर्षया निखिलशाक्यभौतादिपाखण्डिमण्डलाभिमतकुदेवकुगुरुकुधर्ममार्गखण्डनं प्रमाणोपपन्नसर्वज्ञसद्गुरुसद्धर्ममार्गस्वरूपप्रतिपादनमण्डनं पूर्वयुगप्रवरागमविरंचितातिगम्भीरार्थगाथायुगलकविवरणरूपमिदं षट्स्थानकाख्यं श्रावकवक्तव्यतापरनामकं प्रकरणं चकार। तत्र चादावेव तावदेतत्प्रकरणमहापुरप्रवेशद्वारभूतं गाथायुगल-कमुपन्यस्यति स्म—

कयवयकम्मथभावो, सीलवं चेव तह य गुणवंतं। रिउमइववहरणं चिय, गुरुसुस्सूसा य बोद्धव्वा १

पवयणकोसल्लं पुण, छट्ठं ठाणं तु होइ नायव्वं। छट्ठाणगुणेहिं जुओ, उक्कोसो सावओ होइ २

अस्य व्याख्या—व्रतानि—नियमाः, तानि चात्र स्थूलप्राणातिपातविरमणादीनि, तान्येव कर्म—परिकर्म पूर्वसेवा इत्यर्थः। तस्यार्थादेव यतिधर्मस्य। अथवा व्रतानि—सर्वथा प्राणातिपातविरमणादीनि, तेषां कर्म—परिशीलनमणुव्रतादिपालनरूपपूर्व-सेवालक्षणम्। ततः कृतं विहितं व्रतपरिकर्म—महाव्रतप्रतिपत्तिहेतूनामभ्यासो येन स तथोक्तः, स एव कृतव्रतकर्मकः, तस्य भावस्तत्त्वम्। शब्दस्य हि प्रवृत्तिनिमित्तं भावो यथा वृक्षस्य वृक्षत्वम्। तथा च येन निमित्तेनाणुव्रतप्रतिपत्त्यादिना श्राद्धः कृतव्रतकर्माऽभिधीयते स कृतव्रतकर्मकभावः। अथवा व्रतानि—अणुव्रतादीनि, तेषां परिशीलनं मार्गश्रवणज्ञानादिरूपम्।

अयमभिप्रायः,–यथा मन्त्रादिसिद्धये मान्त्रिकेण पूर्वं शुचिस्थानपथ्याशनब्रह्मचर्यादिकमभ्यस्यते, तथा श्राद्धेनापि देशविरतेन भावतः सर्वविरत्यर्थिना पूर्वमणुव्रतादीनि निरतिचाराण्यनुपालनीयानि । अविरतेन तु देशविरत्यर्थिना श्रवणादीन्येवाभ्यसनीयानीति १ ॥ तथा शीलं–सच्चरितं तच्चायतनसेवादिरूपम् । ततः शीलवत्त्वं–सदाचारवत्त्वं, प्राकृतत्वाद्वकारलोपः । 'चः' समुच्चये । 'एव' इत्यवधारणे । तेन शीलवत्त्वमेवैकं श्राद्धस्य विशिष्टत्वमभिव्यनक्तीति । न चैतावता कृतव्रतकर्मत्वादीनां तदनभिव्यञ्जनकत्वप्रसक्तिः, शीलवत्त्ववत् तेषामप्येकैकशस्तदभिव्यञ्जनकत्वादिति भावः । एवमग्रेऽपि यथासंभवं वाच्यम् २ ॥ 'तह य गुणवत्तं' इति । 'तथा च' इत्यपि समुच्चये । "यावन्ति समुच्चये पदानि तावन्ति समुच्चयपदानि" इति न्यायेन न पौनरुक्त्यशङ्कावकाशः । स्वात्मन्यतिशयविशेषोत्पादका धर्मा गुणाः, ते च तत्त्वतः सम्यग्दर्शनादयः, तद्युक्तत्वं गुणवत्त्वं–सम्यक्त्वादिमत्त्वमित्यर्थः ३ ॥ तथा ऋजुः–अकुटिला मतिः–बुद्धिस्तया व्यवहरणं–वृत्त्यर्थं व्यापरणं ऋजुमतिव्यवहरणं वचनाविसंवादादिरूपम् । 'चिय' इत्यवधारणे, स च शीलवत्त्वमेवेतिवद्भावनीयः ४ ॥ तथा गुरूणां–लोके लोकोत्तरे च गौरवार्हाणामाचार्यमातापित्रादीनां (शुश्रूषा–) आभिमुख्यगमनादिप्रतिपत्तिलक्षणा सेवा गुरुशुश्रूषा । सा च 'बोद्धव्या' ज्ञातव्या श्रावकस्य स्थानत्वेन । षष्ठस्थानोद्देशपर्यन्तवर्तिज्ञातव्यपदादेव तत्तद्विशेष्यलिङ्गानुसारेण सर्वस्थानसंबन्धात् गुरुशुश्रूषास्थानसंबन्धे लब्धेऽपि यदत्र बोद्धव्यपदोपादानं तत् समस्तस्थानानां गुरुशुश्रूषासाध्यत्वेन तस्याः सर्वोत्कृष्टत्वतो विशेषेण ज्ञातव्यताज्ञापनार्थमित्यर्थः ५ ॥ १ ॥ 'प्रवचनकौशलमेव' जिनशासननैपुणमेव । 'पुनः' शब्दः पूर्वस्माद्विशेषणार्थः । षष्ठं स्थानं त्विति, तिष्ठति

श्रावकोऽस्मिन्नवहितमनस्कतया वर्त्तत इति स्थानं श्रावकस्य विशिष्टत्वाभिव्यञ्जक आचारविशेषः ॥ ६ ॥ 'तुः' एवकारार्थः, स च योजित एव । 'भवति' वर्त्तते 'बोद्धव्यं' ज्ञातव्यम् । ततश्चैतैः 'षट्स्थानगुणैः' षट्संख्यश्रावकानुष्ठानविशेषैः 'युक्तः' संगतः, उत्कृष्यते शेषेभ्य इत्युत्कर्षः-उत्कृष्ट इत्यर्थः, 'श्रावकः' तत्त्वतो यथावस्थितभगवद्वचनश्रोता 'भवति' संपद्यते । शेषास्तु नाममात्रेणैव । इति द्वारगाथायुगलकार्थः ॥ २ ॥

अथैषां स्थानानां किमर्थमेवं क्रमेणोपन्यासः ? उच्यते—सर्वेषां परस्परतो हेतुहेतुमद्भावादेवमेव सिद्धेः । तथाहि—समस्तशेषस्थानसाध्यत्वेन श्रावकत्वपदव्याश्च परमप्रकर्षरूपत्वेन मूर्द्धाभिषिक्ततया व्रतपरिकर्मण आदावुपन्यासः । यतः—"[2]न विणा परिकम्मेणं, सम्मं संभवइ कज्जसंसिद्धी ॥ परमा परमपयफला, सुमंतिणो मंतसिद्धि व्व ॥ १ ॥" तदनन्तरं तस्यैवाऽऽद्यकारणभूतस्य शीलवत्त्वस्य । यतः—"[3]सीलं हि सयायारो, सामन्नेणावि जस्स सो नत्थि । अइबालो व्व कहं सो, सावगधम्मस्स जोगो त्ति ॥ १ ॥" ततोऽपि शीलप्रधानकार्यभूतस्य गुणवत्त्वस्य । यतः—"[4]सीलेणं वि किं तेणं, संकासेणं तु कासकुसुमस्स । जत्तो वरगुणवत्तं, रमणिज्जफलं न संपन्नं ॥ १ ॥" गुणवत्त्वोपन्यासोत्तरकालं तु सामान्यतो

१ "श्रावक वि" इति प्रत्यन्तरे ॥ २ न विना परिकर्मणा, सम्यक् संभवति कार्यसंसिद्धिः । परमा परमपदफला, सुमन्त्रिणो मन्त्रसिद्धिरिव ॥ ३ शीलं हि सदाचारः, सामान्येनापि यस्य स नास्ति । अतिबाल इव कथं स, श्रावकधर्मस्य योग्य इति ॥ ४ शीलेनापि किं तेन, संकाशेन तु काशकुसुमस्य । यतो वरगुणवत्त्वं, रमणीयफलं न संपन्नम् ॥

सर्वद्वन्द्वविवर्जिताः । प्रहृष्टचित्ता मोदन्ते, सततं येऽत्र मन्दिरे ॥ ६४ ॥ यावत्स चिन्तयत्येवं, द्रमको लब्धचेतनः । तावद्यत्तत्र संपन्नं, तदिदानीं निबोधत ॥ ६५ ॥ प्रासादशिखरे रम्ये, सप्तमे भूमिकातले । तत्राऽऽस्ते लीलयाऽऽसीनः, स राजा परमेश्वरः ॥ ६६ ॥ अधस्ताद्वर्ति तत्सर्वं, नानाव्यापारमञ्जसा । नगरं सततानन्दं, समन्तादवलोकयन् ॥ ६७ ॥ न किञ्चिन्नगरे तत्र, यद्धिश्च खलु वर्त्तते । वस्तु यन्न भवेद्दृष्टेर्गोचरस्तस्य पश्यतः ॥ ६८ ॥ अतः प्रविष्टं तं रोरं, गाढबीभत्सदर्शनम् । महारोगभराक्रान्तं, शिष्टानां करुणास्पदम् ॥ ६९ ॥ कारुण्यादिव राजेन्द्रः, स महात्माऽमलेक्षणः । स्वदृष्टिवृष्टिपातेन, पूतपापमिवाकरोत् ॥ ७० ॥ धर्मबोधकरो नाम, महानसनियुक्तकः । स राजदृष्टिं तां तत्र, पतन्तीं निरवर्णयत् ॥ ७१ ॥ अथासौ चिन्तयत्येवं, तदा साकूतमानसः । किमेतदद्भुतं नाम, साम्प्रतं दृश्यते मया ॥ ७२ ॥ यस्य दृष्टिं विशेषेण, ददाति परमेश्वरः । तूर्णं त्रिभुवनस्यापि, स राजा जायते नरः ॥ ७३ ॥ अयं तु द्रमको दीनो, रोगमलशरीरकः । अलक्ष्मीभाजनं मूढो, जगदुद्वेगकारणम् ॥ ७४ ॥ आलोच्यमानोऽपि कथं, पौर्वापर्येण युज्यते । तदस्योपरि पातोऽयं, सदृष्टेः पारमेश्वरः ? ॥ ७५ ॥ हुं ज्ञातमेष एवात्र, हेतुरस्य निरीक्षणे । स्वकर्मविवरेणात्र, यस्मादेष प्रवेशितः ॥ ७६ ॥ स्वकर्मविवरश्चायं, नापरीक्षितकारकः । तेनायं राजराजेन, सम्यग्दृष्ट्या विलोकितः ॥ ७७ ॥ अन्यच्च पक्षपातोऽत्र, भवने यस्य जायते । परमेश्वरपादानां, स प्रियत्वं प्रपद्यते ॥ ७८ ॥ अयं च नेत्ररोगेण, नितरां परिपीडितः । एतद्दिदृक्षयाऽत्यर्थमुन्मिषत्येव लोचने ॥ ७९ ॥ दर्शनादस्य सहसा, गाढबीभत्सदर्शनम् । प्रमोदाद्वदनं मन्ये, लभते दर्शनीयताम् ॥ ८० ॥ रोमाञ्चयति चाङ्गानि, धूलीधूसरितान्ययम् । ततोऽनुरागो जातोऽस्य, भवने तेन वीक्ष्यते ॥ ८१ ॥ तदयं द्रमकाकारं, बिभ्राणोऽप्यधुना स्फुटम् । राजावलोकनादेव, वस्तुत्वं प्रतिप-

प्रभुदृष्टिपातः १६१-१८३

१ अशासीत्. २ उपरि. ३ नहि नहि प्र. ४ दृढवदनविशेषणम्.

बलात्पयःपानं तद्गुणाश्च १९-२४

कदन्नमूर्च्छा २५-३५

न जान इति पत्थमप्यारूपम् । येन ते स्वस्थता सम्यक्, शरीरस्योपजायते ॥ २० ॥ स तु शङ्काऽऽकुलाऽऽकूतः, किमनेन भविष्यति । मूढात्मा, नोदकं पातुमिच्छति ॥ २१ ॥ कृपापरीतचित्तेन, द्वितत्वाच्चदनिच्छतः । बलाद्विवृत्य वदनं, सलिलं तस्य गालितम् ॥ २२ ॥ तच्चीतममृतास्वादं, चित्ताह्लादकरं परम् । नीरमीरितसंतापं, पीत्वा स्वस्थ इवाभवत् ॥ २३ ॥ नष्टप्रायमहोन्मादो, जातान्यगदतानवः । सुप्रसन्नेन्द्रियग्रामः, क्षणेनैवान्तरात्मना । सोऽचिन्तयदिदं चित्ते, किञ्चिद्विमल[3]चेतनः ॥ २५ ॥ महामोहहतेनाहो, नरोऽयमतिवत्सलः । मया महात्मा पापेन, वञ्चकत्वेन कल्पितः ॥ २६ ॥ ममाञ्जनप्रयोगेण, विहिता पटुदृष्टिता । अनेन तोयपानेन, जनिता स्वस्थता परा ॥ २७ ॥ तस्मान्महोपकारीति, किमस्योपकृतं मया? । महानुभावतां मुक्त्वा, नान्यदस्य प्रवर्त्तकम् ॥ २८ ॥ एवं चिन्तयतोऽप्यस्य, मूर्च्छा तत्र कदन्नके । गाढं भावितचित्तत्वान्न कथञ्चिन्निवर्त्तते ॥ २९ ॥ अथ तद्भोजने दृष्टिं, पातयन्तं मुहुर्मुहुः । विदित्वा तदभिप्रायमितरस्तमभाषत ॥ ३० ॥—अरे द्रमक! दुर्बुद्धे, किमिदं नावबुध्यसे? । यदेषा कन्यका तुभ्यं, परमान्नं प्रयच्छति ॥ ३१ ॥ भवन्ति रोराः प्रायेण, बहवोऽन्येऽपि पापिनः । त्वत्समो नास्ति निर्भाग्यो, मयैतत्परिनिश्चितम् ॥ ३२ ॥ यस्त्वं कदन्नलाम्पट्यात्सुधाऽऽकारमिदं मया । दाप्यमानं न गृह्णासि, परमान्नमनाकुलः ॥ ३३ ॥ अन्येऽस्मात्सद्मनो राज्ञाः, सत्वाम्निष्ठन्ति दुःखिताः । तेषु नैवादरोऽस्माकं, न ते राज्ञाऽवलोकिताः[6] ॥ ३४ ॥ यतस्त्वं भवनं दृष्ट्वा, मनागाह्लादितो हृदि । तवोपरि नरेन्द्रस्य, दयाऽतोऽस्तीति गम्यते ॥ ३५ ॥ प्रिये प्रियं सदा कुर्युः, स्वामिनः सेवका इति । यो न्यायस्तद्विधानार्थं, वयं त्वयि

१ पायितं. २ नाशितसन्तापं. ३ लोचनः प्र. ४ महानसनियुक्तः. ५ दृष्टिनी प्र. ६ यत इति शेषः ७ स्वामिनः प्रिये सेवकाः सदा शिवं कुर्युरिति.

॥ १३ ॥

परमान्नं न गृह्णाति ?, ददात्यपि च नोत्तरम् ॥ २०० ॥ विद्राणवदनोऽत्यन्तं, निमीलितविलोचनः । हृतसर्वस्ववन्मोहात्, संजातः काष्ठ-
कीलवत् ॥ १ ॥ तदयं नोचितो मन्ये, परमान्नस्य पापभाक् । यद्वा नास्य वराकस्य, दोषोऽयमुपलभ्यते ॥ २ ॥ अयं हि रोगजालेन,
बहिरन्तश्च वेष्टितः । वेदनाविह्वलो मन्ये, न हि जानाति किञ्चन ॥ ३ ॥ अन्यथा कथमेतत्स्यात्, कदन्नलवलम्पटः । अमृतास्वादम-
प्येष, न गृह्णीयात्सचेतनः ? ॥ ४ ॥ तदयं निर्गदो हन्त, केनोपायेन जायते ? । आ ज्ञातं विद्यते चारु, मम तद् भेषजत्रयम् ॥ ५ ॥
यत्तावद्विमलालोकं, नाम मे परमाञ्जनम् । समस्तनेत्ररोगाणां, स्यादपाकरणक्षमम् ॥ ६ ॥ सूक्ष्मव्यवहितातीतभाविभावविलोकने । परमं
कारणं मन्ये, प्रयुक्तं तद्विधानतः ॥ ७ ॥ तत्त्वप्रीतिकरं नाम, यच्च तीर्थोदकं परम् । विद्यते मम तत्सर्वरोगतानवकारणम् ॥ ८ ॥
विशेषात्पुनरुन्मादसूदनं तदुदाहृतम् । दृष्टं च पटुदृष्टित्वे, कारणं वर्णितं बुधैः ॥ ९ ॥ महाकल्याणकं नाम, यच्चैतदुपढौकितम् । पर-
मान्नमिदं सर्वगदनिर्मूलनक्षमम् ॥ १० ॥ प्रयुज्यमानं विधिना, वर्णं पुष्टिं धृतिं बलम् । मनःप्रसादमौर्जित्यं, वयःस्तम्भं सवीर्य-
ताम् ॥ ११ ॥ तथाऽजरामरत्वं च, कुर्यादित्यत्र संशयः । नातः परतरं मन्ये, लोकेऽपि परमौषधम् ॥ १२ ॥ तदेनममुना सम्यक्,
त्रयेणापि तपस्विनम् । व्याधिभ्यो मोचयामीति, चित्ते तेनावधारितम् ॥ १३ ॥ ततः शलाकामादाय, विन्यस्याग्रे तदञ्जनम् । तस्य
धूनयतो ग्रीवामञ्जिते तेन लोचने ॥ १४ ॥ प्रह्लादकत्वाच्छीतत्वादचिन्त्यगुणयोगतः । तदनन्तरमेवास्य, चेतना पुनरागता ॥ १५ ॥
क्षणादुन्मीलितं चक्षुर्विनष्टा इव तद्गदाः । मनागाच्छादितश्चित्ते, किमेतदिति मन्यते ॥ १६ ॥ तथापि च तदाकूतं, भिक्षारक्षणलक्षणम् ।
पूर्वविधवशान्नैव, सम्यगस्य निवर्त्तते ॥ १७ ॥ विजनं वर्त्तते हन्त, लास्यत्येनां व्यचिन्तयन् । नष्टुकामो दिगन्तेषु, दृष्टिं धत्ते पुनः
पुनः ॥ १८ ॥ अथाञ्जनवशाद्दृष्ट्वा, पुरः संजातचेतनम् । तं रोरं मधुरैर्वाक्यैर्धर्मबोधकरोऽब्रवीत् ॥ १९ ॥ पिबेदमुदकं भद्र ?, तापो-

॥ १२ ॥

बलात्पयःपानं तद्गुणश्च १९-२४
कदन्नमूर्छा २५-३६

शरीरस्योपजायते ॥ २० ॥ स तु शङ्काऽऽकुलाऽऽकूतः, किमनेन भविष्यति । न जान इति
पथ्यकारणम् । येन ते स्वस्थता सम्यक्, शरीरस्योपजायते ॥ २० ॥ स तु शङ्काऽऽकुलाऽऽकूतः, किमनेन भविष्यति । न जान इति गूढात्मा, नोदकं पातुमिच्छति ॥ २१ ॥ कृपापरीतचित्तेन, हितत्वात्तदनिच्छतः । बलाद्विवृत्य वदनं, सलिलं तस्य गालितम् ॥ २२ ॥ तच्छीतममृतास्वादं, चित्ताह्लादकरं परम् । नीरमीरितसंतापं, पीत्वा स्वस्थ इवाभवत् ॥ २३ ॥ नष्टप्रायमहोन्मादो, जातान्यगदतानवः । प्रनष्टद्विगदाहार्तिस्ततोऽसौ समपद्यत ॥ २४ ॥ मुग्रसन्नेन्द्रियग्रामः, स्वस्थेनैवान्तरात्मना । सोऽचिन्तयदिदं चित्ते, किञ्चिद्विमलचेतनः ॥ २५ ॥ महामोहहतेनाहो, नरोऽयंमतिवत्सलः । मया महात्मा पापेन, वञ्चकत्वेन कल्पितः ॥ २६ ॥ ममाञ्जनप्रयोगेण, विहिता पटुदृष्टिता । अनेन तोयपानेन, जनिता स्वस्थता परा ॥ २७ ॥ तस्मान्महोपकारीति, किमस्योपकृतं मया? । महानुभावतां मुक्त्वा, नान्यदस्य प्रवर्तकम् ॥ २८ ॥ एवं चिन्तयतोऽप्यस्य, मूर्च्छा तत्र कदन्नके । गाढं भावितचित्तत्वान्न कथञ्चिन्निवर्तते ॥ २९ ॥ अथ तद्भोजने दृष्टिं, पातयन्तं मुहुर्मुहुः । विदित्वा तदभिप्रायमितरत्नमभाषत ॥ ३० ॥—अरे द्रमक! दुर्बुद्धे, किमिदं नावबुध्यसे? । यदेषा कन्यका तुभ्यं, परमान्नं प्रयच्छति ॥ ३१ ॥ भवन्ति रोराः प्रायेण, बहवोऽन्येऽपि पापिनः । त्वत्समो नास्ति निर्भाग्यो, मयैतत्परिनिश्चितम् ॥ ३२ ॥ यस्त्वं कदन्नलाम्पट्यात्सुधाऽऽकारमिदं मया । दाप्यमानं न गृह्णासि, परमान्नमनाकुलः ॥ ३३ ॥ अन्येऽस्मात्सद्मनो नाथाः, मरणान्निघ्नन्ति दुःखिताः । तेषु नैवादरोऽस्माकं, न ते राज्ञाऽवलोकिताः ॥ ३४ ॥ यतस्त्वं भवनं दृष्ट्वा, मनागाह्लादितो हृदि । मयोपरि नरेन्द्रस्य, दयाऽस्तीति गम्यते ॥ ३५ ॥ प्रिये प्रियं सदा कुर्युः, स्वामिनः सेवका इति । यो न्यायस्तद्विधानार्थं, वयं त्वयि

१ पायितं. २ नाशितगन्तारं. ३ लोचनः प्र. ४ महानसनियुक्तः. ५ हटिनी प्र. ६ यत इति शेषः ७ स्वामिनः प्रिये सेवकाः सदा प्रियं कुर्युरिति.

परमाग्नं न गृह्णाति ?, ददात्यपि च नोत्तरम् ॥ २०० ॥ विद्राणवदनोऽत्यन्तं, निमीलितविलोचनः । हृतसर्वस्वनन्मोहात्, संजातः काष्ठ-
कीलवत् ॥ १ ॥ तदयं नोचितो मन्ये, परमान्नस्य पापभाक् । यद्वा नास्य वराकस्य, दोषोऽयमुपलभ्यते ॥ २ ॥ अयं हि रोगजालेन,
बहिरन्तश्च वेष्टितः । वेदनाविह्वलो मन्ये, न हि जानाति किञ्चन ॥ ३ ॥ अन्यथा कथमेतत्स्यात्, कदन्नलवलम्पटः । अमृतास्वादमप्येष,
न गृह्णीयात्सचेतनः ? ॥ ४ ॥ तदयं निर्गदो हन्त, केनोपायेन जायते ? । आ ज्ञातं विद्यते चारु, मम तद् भेषजत्रयम् ॥ ५ ॥
यत्तावद्विमलालोकं, नाम मे परमाञ्जनम् । समस्तनेत्ररोगाणां, स्यादपाकरणक्षमम् ॥ ६ ॥ सूक्ष्मव्यवहितातीतभाविभावविलोकने । परमं
कारणं मन्ये, प्रयुक्तं तद्विधानतः ॥ ७ ॥ तत्त्वप्रीतिकरं नाम, यच्च तीर्थोदकं परम् । विद्यते मम तत्सर्वरोगतानवकारणम् ॥ ८ ॥
विशेषात्पुनरुन्मादसूदनं तदुदाहृतम् । दृढं च पटुदृष्टित्वे, कारणं वर्णितं बुधैः ॥ ९ ॥ महाकल्याणकं नाम, यच्चैतदुपढौकितम् । पर-
मान्नमिदं सर्वगदनिर्मूलनक्षमम् ॥ १० ॥ प्रयुज्यमानं विधिना, वर्णं पुष्टिं धृतिं बलम् । मनःप्रसादमौर्जित्यं, वयःस्तम्भं सवीर्य-
ताम् ॥ ११ ॥ तथाऽजरामरत्वं च, कुर्यादेतन्न संशयः । नातः परतरं मन्ये, लोकेऽपि परमौषधम् ॥ १२ ॥ तदेनममुना सम्यक्,
यत्नेनापि तपस्विनम् । व्याधिभ्यो मोचयामीति, चित्ते तेनावधारितम् ॥ १३ ॥ ततः शलाकामादाय, विन्यस्यामे तदञ्जनम् । तस्य
धूनयतो ग्रीवामञ्जिते तेन लोचने ॥ १४ ॥ प्रह्लादकत्वाच्छीतत्वादचिन्त्यगुणयोगतः । तदनन्तरमेवास्य, चेतना पुनरागता ॥ १५ ॥
क्षणादुन्मीलितं चक्षुर्विनष्टा इव तद्गदाः । मनागाह्लादितश्चित्ते, किमेतदिति मन्यते ॥ १६ ॥ तथापि च तदाकूतं, भिक्षारक्षणलक्षणम् ।
पूर्ववेधवशान्नैव, सम्यगस्य निवर्त्तते ॥ १७ ॥ विजनं वर्त्तते हन्त, लास्यत्येनां व्यचिन्तयत् । नष्टुकामो दिगन्तेषु, दृष्टिं धत्ते पुनः
पुनः ॥ १८ ॥ अथाञ्जनवशादृष्ट्वा, पुरः संजातचेतनम् । तं रोरं मधुरैर्वाक्यैर्धर्मबोधकरोऽब्रवीत् ॥ १९ ॥ पिबेदमुदकं भद्र ?, तापो-

उपमिती<br>पीठबन्धः<br>॥

पनमकारणम् । येन ते स्वस्थता सम्यक्, शरीरस्योपजायते ॥ २० ॥ स तु शङ्काऽऽकुलाऽऽकूतः, किमनेन भविष्यति । न जान इति मूढात्मा, नोदकं पातुमिच्छति ॥ २१ ॥ कृपापरीतचित्तेन, ह्रित्वात्तदनिच्छतः । बलाद्विवृत्य वदनं, सलिलं तस्य गालितम् ॥ २२ ॥ तन्शीतममृतास्वादं, निस्ताह्लादकरं परम् । नीरमीरितैसंतापं, पीत्वा स्वस्थ इवाभवत् ॥ २३ ॥ नष्टप्रायमहोन्मादो, जातान्यगदतानवः । क्षणाद्विगतदाहार्तिस्ततोऽसौ समपद्यत ॥ २४ ॥ सुप्रसन्नेन्द्रियग्रामः, स्वस्थेनैवान्तरात्मना । सोऽचिन्तयदिदं चित्ते, किञ्चिद्विमलचेतनः ॥ २५ ॥ महामोहहतेनाहो, नरोऽयमतिवत्सलः । मया महात्मा पापेन, वञ्चकत्वेन कल्पितः ॥ २६ ॥ ममाञ्जनप्रयोगेण, विहिता पटुदृष्टिता । अनेन तोयपानेन, जनिता स्वस्थता परा ॥ २७ ॥ तस्मान्महोपकारीति, किमस्योपकृतं मया? । महानुभावतां मुक्त्वा, नान्यदस्य प्रवर्त्तकम् ॥ २८ ॥ एवं चिन्तयतोऽप्यस्य, मूर्च्छा तत्र कदन्नके । गाढं भावितचित्तत्वान्न कथञ्चिन्निवर्त्तते ॥ २९ ॥ अथ तद्भोजने दृष्टिं, पातयन्तं मुहुर्मुहुः । विदित्वा तदभिप्रायमितरस्तमभाषत ॥ ३० ॥—अरे द्रमक! दुर्बुद्धे, किमिदं नावबुध्यसे? । यदेषा कन्यका तुभ्यं, परमान्नं प्रयच्छति ॥ ३१ ॥ भवन्ति रोराः प्रायेण, बहवोऽन्येऽपि पापिनः । त्वत्समो नास्ति निर्भाग्यो, मयैतत्परिनिश्चितम् ॥ ३२ ॥ यस्त्वं कदन्नलाम्पट्यात्सुधाऽऽकारमिदं मया । दाप्यमानं न गृह्णासि, परमान्नमनाकुलः ॥ ३३ ॥ अन्येऽस्मात्सद्मनो याम्याः, सरागाभिघ्नन्ति दुःखिताः । तेषु नैवादरोऽस्माकं, न ते राज्ञाऽवलोकिताः ॥ ३४ ॥ यतस्त्वं भवनं दृष्ट्वा, मनागाह्लादितो हृदि । तवोपरि नरेन्द्रस्य, दयाऽतोऽस्तीति गम्यते ॥ ३५ ॥ प्रिये प्रियं सदा कुर्युः, स्वामिनः सेवका इति । यो न्यायस्तद्विधानार्थं, वयं त्वयि

१ पायितं. २ नाशितसन्तापं. ३ लोचनः प्र. ४ महानसनियुक्तः. ५ दृष्टिनी प्र. ६ यत इति शेषः ७ स्वामिनः प्रिये सेवकाः सदा शिवं कुर्युरिति.

जलादपयः-<br>पानं तद्गु-<br>णश्च<br>१९-२४<br>कदन्न-<br>मूर्च्छा<br>२५-३६

दयालवः ॥ ३६ ॥ अमूढलक्ष्यो राजाऽयं, नापात्रे कुरुते मतिम् । अैवष्टम्भः किलास्माकं, स त्वया वितथीकृतः ॥ ३७ ॥ इदं हि मधुरास्वादं, सर्वव्याधिनिर्बर्हणम् । नादरसे त्वं कथं तुच्छे, कदन्ने बद्धमानसः ? ॥ ३८ ॥ अतस्त्यजेदं दुर्बुद्धे !, गृहाणेदं विशेषतः । यत्प्रभावादिमे पश्य, मोदन्ते सर्वजन्तवः ॥३९॥ ततः संजातविश्वासस्तथाऽऽविर्भूतनिर्णयः । तत्त्यागवचनाद्दीनमनं प्रतीदमवोचत ॥४०॥ —यदेतद् गदितं नाथैस्तत्सत्यं मम भासते । किं तु विज्ञपयाम्येकं, वचनं तन्निबोधत ॥ ४१ ॥ यदिदं भोजनं नाथ !, वर्त्तते कर्परोदरे । प्राणेभ्योऽपि विशेषेण, स्वभावादतिवल्लभम् ॥ ४२ ॥ उपार्जितं च क्लेशेन, कॅले निर्वाहकं तथा । इदं तु तौनकं नाहं, जानामि ननु कीदृशम् ? ॥ ४३ ॥ तदिदं नैव मोक्तव्यं, मया स्वामिन् ! कथञ्चन । यदि देयं सहान्नेन, दापय स्वं च भोजनम् ॥ ४४ ॥ इतरस्तु तदाकर्ण्य, मनसा पर्यचिन्तयत् । पश्यताचिन्त्यसामर्थ्यं, महामोहविजृम्भितम् ॥ ४५ ॥ यदयं द्रमको मोहात्सर्वव्याधिकरे रतः । अस्मिन् कदन्नके नैर्तत्तृणाय मम मन्यते ॥ ४६ ॥ तथापि किञ्चिद्भूयोऽपि, शिक्षयामि तपस्विनम् । यदि मोहो विलीयेत, स्यादस्मै हितमुत्तमम् ॥ ४७ ॥ इत्याकलय्य तेनोक्तं, भद्र ! किं नावगच्छसि ?। एतन्निमित्तकाः सर्वे, रोगास्तव शरीरके ॥ ४८ ॥ एतद्धि भक्षितं सैवैः, सर्वदोषप्रकोपनम् । जायते नितरां तेन, त्यक्तव्यं शुद्धबुद्धिभिः ॥ ४९ ॥ तवापि भासते भद्र !, विपर्यासादिदं हृदि । यदि स्वादं पुनर्वेत्सि, मामकान्नस्य तत्त्वतः ॥ ५० ॥ ततस्त्वं वार्यमाणोऽपि, त्यजस्येवेदमात्मना । को नामामृतमास्वाद्य, विषमापातुमिच्छति ? ॥५१॥ युग्मम् । अन्यथाञ्जनसामर्थ्यं, माहात्म्यं सलिलस्य च । किं न दृष्टं त्वया ? येन, मद्वचो नानुतिष्ठसि ॥ ५२ ॥ यथोक्तमर्जितं क्लेशादिदं

१ अमूढलक्षणो. २ इत्येवंरूपो यो विश्वासः. ३ नाशकम्. ४ आपत्तौ. ५ परमान्नं. ६ मम प्र. ७ हितकरं वा नवेति. ८ परमान्नं. चैतत् प्र. ९ येन केनापीति. १० मात्राय प्र.

मुञ्चामि नो ततः । तथापि श्रूयतां सौम्य !, मोहं हित्वा त्वयाऽधुना ॥ ५३ ॥ येनैवोपार्जितं क्लेशान्, क्लेशरूपं च वर्त्तते । क्लेशस्य च
पुनर्हेतुस्तेनैवेदं विमुच्यते ॥ ५४ ॥ यथोक्तं न त्यजामीदं, काले निर्वाहकं यतः । तत्राप्याकर्ण्यतां तावत्त्यक्त्वा तत्र विपर्ययम् ॥ ५५ ॥
भवत्तदुःखसंतानहेतुर्निर्वाहि यद्यपि । एतद्धि किं त्वया स्थेयं, दुःखग्रस्तेन सर्वदा ? ॥ ५६ ॥ इदं तु तावकं नाहं, जानामि ननु
कीदृशम् । यदुक्तं तत्र विश्रब्धो, वक्ष्यमाणं मया शृणु ॥ ५७ ॥ क्लेशं विना सदाकालं, प्रयच्छामि यथेच्छया । परमान्नमिदं तुभ्यं,
गृहाण स्वमनाकुलः ॥ ५८ ॥ सर्मूलकाषं कषति, सर्वव्याधीनिदं हि ते । तुष्टिं पुष्टिं बलं वर्णं, वीर्यादीन् वर्द्धयत्यपि ॥ ५९ ॥ किं
पानेनाभयो भूत्वा, सततानन्दपूरितः । यथाऽयमास्ते राजेन्द्रः, स्यास्त्वमेतद्बलात्तथा ॥ ६० ॥ ततो मुञ्चामहं भद्र !, त्यजेदं रोगकार-
णम् । गृहाणेदं महानन्दकारणं परमौषधम् ॥ ६१ ॥ स प्राह—त्यक्तमात्रेऽस्मिन्, म्रियेऽहं स्नेहविभ्रमात् । भट्टारक ! ततो देहि,
मत्सन्निभे स्वभेषजम् ॥ ६२ ॥ ततो विज्ञाय निर्बन्धमितरः पर्यकल्पयत् ।—नैवास्य शिक्षणोपायो, विद्यतेऽन्योऽधुना स्फुटम् ॥ ६३ ॥
ततोऽग्रे विद्यमानेऽपि, दीयतामिदमौषधम् । पश्चाद्विज्ञातसद्भावः, स्वयमेव विहास्यति ॥ ६४ ॥ इत्याकलय्य तेनोक्तो, गृह्यतां भद्र !
साम्प्रतम् । परमान्नमिदं सत्नो, गृहीत्वा चोपयुज्यताम् ॥ ६५ ॥ एवं भवतु तेनोक्ते, संज्ञिता तेन तद्दया । दत्तं तया गृहीत्वा तेन
तत्रैव भक्षितम् ॥ ६६ ॥ ततस्तदुपयोगेन, बुभुक्षा शान्तिमागता । नष्टा इव गदव्राता, येऽस्य सर्वाङ्गसंभवाः ॥ ६७ ॥ याऽसावञ्जन-
संपाता, या च सा सलिलोद्भवा । सुखासिका क्षणात्तस्य, साऽनन्तगुणतां गता ॥ ६८ ॥ अथ प्रादुर्भवद्भक्तिर्नष्टाशङ्कः प्रमोदितः । स
तं प्रत्याह—नान्योऽस्मि, नाथो मे भवतो विना ॥ ६९ ॥ यतोऽनुपकृतैरेव, भवद्भिर्भाग्यवर्जितः । अहं सर्वाधमोऽप्येवमेतावदनुक-

१ कदशम्. २ राजसामीप्ये गद्गदेति वर्तमाना. ३ निर्मूल प्र. ४ कदशे. स्निग्धेव भे० प्र. ५ अस्मिन्कदन्ने. ६ परमान्नं. ७ सुखिता. ८ युष्मान्विना.

म्पितः ॥ ७० ॥ इतरः प्राह—यद्येवमुपविश्य क्षणं त्वया । श्रूयतां यदहं वच्मि, श्रुत्वा तच्च समाचर ॥ ७१ ॥ अथोपविष्टे विश्रब्धं, तस्मिन्स प्राह चाटुभिः । मनः प्रह्लादयंस्तस्य, वचोभिर्हितकाम्यया ॥ ७२ ॥ यदभ्यधायि भवता, नाथोऽन्यो नास्ति मेऽधुना । तत्र वाच्यं यतः स्वामी, तव वर्यो नृपोत्तमः ॥ ७३ ॥ अयं हि भगवान्नाथो, भुवनेऽपि चराचरे । विशेषतः पुनर्येऽत्र, भवने सन्ति जन्तवः ॥ ७४ ॥ येऽस्य किङ्करतां यान्ति, नराः कल्याणभागिनः । तेषामल्पेन कालेन, भुवनं किङ्करायते ॥ ७५ ॥ येऽत्यन्तपापिनः सत्त्वा, ये नैव सुखभाजनम् । ते वराका नरेन्द्रस्य, नामाप्यस्य न जानते ॥ ७६ ॥ ये भाविभद्रा दृश्यन्ते, सदनेऽस्य महात्मनः । तेषां स्वकर्मविवरो, ददात्यत्र प्रवेशकम् ॥ ७७ ॥ वस्तुतः प्रतिपद्यन्ते, तेऽमुं नास्त्यत्र संशयः । विशेषाज्ज्ञानते मुग्धाः, पश्चात्ते कथितं मया ॥ ७८ ॥ तदेष नाथस्ते भद्र!, जात एव नरेश्वरः । यतःप्रभृति पैस्त्येऽस्मिन्, प्रविष्टस्त्वं सुपुण्यकः ॥ ७९ ॥ केवलं तु विशेषेण, मद्वचैस्तः प्रपद्यताम् । यावज्जीवमयं नाथो, भवतां शुद्धचेतसां ॥ ८० ॥ विशेषतः पुनर्येऽस्य, गुणास्तानवभोत्स्यसे । यथा यथा गता देहे, यास्यन्ति तव तानवम् ॥ ८१ ॥ अयं च तानवोपायोऽमीषां नाशे च कारणम् । भेषजत्रितयस्यास्य, परिभोगः क्षणे क्षणे ॥ ८२ ॥ तत्सौम्य! स्थीयतामत्र, भवने मुक्तसंशयम् । त्वया त्रयमिदं युक्त्या, भुञ्जानेन प्रतिक्षणम् ॥ ८३ ॥ ततस्त्वं दलिताशेषरोगव्रातो नरेश्वरम् । विशेषतः समाराध्य, भविताऽसि नृपोत्तमः ॥ ८४ ॥ इयं च तदया तुभ्यं, दास्यत्येतद्दिने दिने । किमत्र बहुनोक्तेन?, भोक्तव्यं भेषजत्रयम् ॥ ८५ ॥ ततः प्रह्लादितः स्वान्ते, वचनैस्तस्य कोमलैः । स्वाकूतमुररीकृत्य, स एवं द्रमकोऽब्रवीत् ॥ ८६ ॥ इदं नाद्यापि शक्नोमि, पापस्त्यक्तुं कदन्नकम् । अन्यत्तु यन्मया किञ्चित्, कर्त्तव्यं तत्समादिश ॥ ८७ ॥ तच्छ्रुत्वा स्फुरितं चित्ते, धार्म-

१ ॰नेऽत्र प्र. २ मुग्धा विशेषात्, पश्चाज्ज्ञानतं इति तुभ्यं मयोक्तं प्राक्. ३ प्रासादे. ४ योऽस्य स्मिन् प्र. ५ मद्वचस्तत् प्र. ६ क्रियाविशेषणम्.

पोभवरे तदा । शुक्लेदं भयमित्युक्तः, किमेवं यत भार्यते ॥ ८८ ॥ आ ज्ञातमेष तुच्छत्वादेवं चिन्तयते हृदि । भोजनत्याजनार्थो मे, मर्वोऽयं विस्तरो गिराम् ॥ ८९ ॥ क्लिष्टचित्ता जगत्सर्वं, मन्यन्ते दुष्टमानसम् । शुद्धाभिसन्धयः सर्वं, शुद्धचित्तं विजानते ॥ ९० ॥ ततो विहस्य तेनोक्तं, मा भैषीर्भद्र! किञ्चन । नाधुना त्याजयामीदमन्नमेधि निराकुलः ॥ ९१ ॥ अहमत्याजयं पूर्वं, तवैव हितकाम्यया । यदि नो रोचते तुभ्यं, तूष्णींभावोऽत्र मे मतः ॥ ९२ ॥ यचैतदुपदिष्टं ते, प्राक् कर्त्तव्यतया मया । तदत्र भवता किञ्चित्, किं सम्यगवधारितम्? ॥ ९३ ॥ सोऽब्रवीन्नैव तन्नाथ!, किञ्चित्संलक्षितं मया । केवलं पेशलालापैस्तावकैर्मोदितो हृदि ॥ ९४ ॥ अज्ञातपरमार्थाऽपि, सतां नूनं सरस्वती । चेतोऽतिसुन्दरत्वेन, प्रीणयत्येव देहिनाम् ॥ ९५ ॥ अन्यत्र चेतसो न्यासो, नयने तव संमुखे । विशल्येकेन कर्णेन, यच्छ्रो यातीतरेण मे ॥ ९६ ॥ यद्यत्र मनसो नाथ!, वैधुर्ये मम कारणम् । तत्साम्प्रतं भयापायात्, कथयामि निराकुलः ॥ ९७ ॥ यदा शाकारितः पूर्वं, भवद्भिः करुणापरैः । अहमन्नप्रदानार्थं, तदा मे हृदि वर्त्तते ॥ ९८ ॥ लास्यत्येष कचिन्नीत्वा, मामकं भोजनं नरः । तदाकृतयशाद्गाढं, ध्यात्वाऽचेतनतां गतः ॥ ९९ ॥ यदा प्रबोधितः पश्चादनेन सुवत्सलैः । भवद्भिश्चिन्तितं तूर्णं, नश्यामीति तदा मया ॥ १०० ॥ यदा तु तोयपानेन, शीतीकृत्य वपुर्मम । कृतं संभाषणं नाथैस्तदा विश्रम्भमागतः ॥ १ ॥ चिन्तितं च मया योऽयं, ममैवमुपकारकः । स महाभूतिसंपन्नः, कथं स्यादन्नहारकः?, ॥ २ ॥ विमुञ्चेदं गृहाणेदं, यदा नाथैः प्रजल्पितम् । तदा किं करवाणीति, चित्तेनाकुलतां गतः ॥ ३ ॥ नैष तावत्स्वयं लाति, त्याजयत्येव केवलम् । त्यक्तुं नैतच्च शक्नोमि, किं वदामि तदुत्तरम्? ॥ ४ ॥ सत्यस्मिन् देहि मे भोज्यमित्युक्ते दापितं त्वया । तदास्वादात्पुनर्ज्ञातं, ममायमतिवत्सलः ॥ ५ ॥ तत् किमस्य वचः कुर्वन्, मुञ्चामीदं स्वभोजनम्? ।

कदन्नमतिबन्धः स्वचिन्तितप्रकटनं च ८७-३११

१ एष इति. २ स्थिते. ३ भयनाशात्. ४ त्यजेदं च प्र. ५ मयाऽयम. प्र.

मरिष्ये ननु मुक्तेऽस्मिन्, मूर्च्छयाऽऽकुलचेतनः ॥ ६ ॥ अयं वक्ति हितत्वेन, शक्तोऽस्म्यस्य न मोचने । अहो व्यसनमापन्नं, ममेदमतिदुस्तरम् ॥ ७ ॥ एवमाकुलचित्तस्य, यन्नाथैर्बहु भाषितम् । तन्मे भृतघटस्येव, लुठित्वा पार्श्वतो गतम् ॥ ८ ॥ नाधुना त्याजयामीति, भवद्भिर्ज्ञातमानसैः । इदानीं पुनरादिष्टे, मनाग् जातो निराकुलः ॥ ९ ॥ तद् ब्रूत साम्प्रतं नाथाः!, कर्त्तव्यं पापकर्मणा । यन्मयेदृशचित्तेन, येनाहमवधारये ॥ १० ॥ तदाकर्ण्य दयाऽऽढ्येन, यदुक्तं प्राक् समासतः । सविस्तरतरं तस्मै, तत्पुनः प्रतिपादितम् ॥ ११ ॥ ततोऽञ्जनजलाक्षाणां, नरेन्द्रस्य विशेषतः । प्रायोऽज्ञातगुणं ज्ञात्वा, स प्रतीदमभाषत ॥ १२ ॥—अहं तात! नरेन्द्रेण, प्रागादिष्टो यथा त्वया । योग्येभ्य एव दातव्यं, मदीयं भेषजत्रयम् ॥ १३ ॥ अयोग्यदत्तं नैवैतदुपकारं प्रकल्पयेत् । प्रत्युतानर्थसंतानं, विदधाति विशेषतः ॥ १४ ॥ मया पृष्टं तदा नाथ!, कथं ज्ञास्यामि तानहम् । ततः प्रत्युक्तवान् राजा, तेषामाख्यामि लक्षणम् ॥ १५ ॥—ये तावदस्य नाद्यापि, रोगिणो योग्यतां गताः । स्वकर्मविवरस्तेषां, न गृहेऽत्र प्रवेशकः ॥ १६ ॥ सोऽप्यादिष्टो मया पूर्वं, ये योग्या भेषजत्रये । प्रवेशनीयास्ते नान्ये, भवनेऽत्र त्वया नराः ॥ १७ ॥ प्रविष्टा अपि ये दृष्ट्वा, मोदन्ते नैव मद्गृहम् । येषां न मामिका दृष्टिर्विशेषेण निरीक्षिका ॥ १८ ॥ ते ह्यन्यद्वारपालेन, स्युः कथञ्चित्प्रवेशिताः । त्वयाऽपि लिङ्गतो ज्ञात्वा, वर्जनीयाः प्रयत्नतः ॥ १९ ॥ ये मन्मन्दिरमालोक्य, जायन्ते हृष्टचेतनाः । रोगिणो भाविभद्रत्वान्निरीक्षेऽहं विशेषतः ॥ २० ॥ स्वकर्मविवरानीता, ये मया च विलोकिताः । ते ज्ञेयास्त्रितयस्यास्य, पात्रभूतास्त्वया नराः ॥ २१ ॥ तेषां तु निकर्षस्थानमिदमेवौषधत्रयम् । प्रयुज्यमानं स्वगुणैः संग्रहेतरकारकम् ॥ २२ ॥ येभ्योऽदो

१ दुःखम्. २ भृतघटस्येव. प्र. ३ मीदं प्र. ४ ज्ञातो प्र. ५ यूयं. प्र. ६ तया. ७ रोगाणां. ८ घात. ९ सद्गुणानां संग्रहे दोषाणां नाशे. १० भेषजत्रयम्.

ये नादितः प्रपद्यन्ते, वलाद्येषां विगाल्यते ।
गेनते भिषे, प्रयुक्तं गुणकारकम् । अद्वेगतो विशेषेण, ते सुसाध्याः प्रकीर्त्तिताः ॥ २३ ॥ ये नादितः प्रपद्यन्ते, वलाद्येषां विगाल्यते । द्वेष्टारो दायकेऽप्यस्य, ते स्व-
कालक्षेपेण ते ज्ञेयाः, कृच्छ्रसाध्यास्त्वयाऽनुगाः ॥ २४ ॥ येभ्यो न रोचतेऽत्यर्थं, न क्रामति नियोजितम् । तेन ते कृच्छ्रसाध्यत्वं, लक्षणेन विभाव्यते ॥ २६ ॥ अन्यच्च ये
साध्या नराधमाः ॥ २५ ॥ तदेतद्राजराजेन, मम यत्सम्प्रदायितम् । अचिन्त्यवीर्यसंपूर्णो, निःशेषगदवैर्हिणी । तेषामेव
प्रपद्यन्ते, भावतोऽमुं नरेश्वरम । यावज्जीवं विशेषेण, नायं निःशङ्कमानसाः ॥ २७ ॥ भावसारं महात्मानो, भक्तिमाह्या यतः
गुणं धत्ते, मदीया भेषजक्रिया ॥ २८ ॥ युग्मम् । अतस्त्वं प्रतिपद्यस्व, नाथत्वेन नृपोत्तमम् । प्रपद्य स्वामिभावेन, हृष्टा जाताः कृतक्रियाः ॥ ३० ॥ बलिनस्ता-
स्मृताः ॥ २९ ॥ अनन्तास्तात[1] रोगार्त्ता, भक्तितोऽमुं नृपोत्तमम् । तद्वत्स! प्रयतो भूत्वा, कृत्वा स्वं निश्चलं मनः ।
यता रोगा, अपथ्ये लम्पटं मनः । महायत्नं विना नात्र, लक्ष्यते गदसंक्षयः ॥ ३१ ॥ भेषजत्रयमेतत्त्वं, कुरुष्वारोग्यमात्मनः
स्थिरता निराकुलोऽत्रैव, वितते राजमन्दिरे ॥ ३२ ॥ आदाय कन्यकाहस्तात्प्रयुञ्जानः क्षणे क्षणे । तेनापि तद्दया तस्य, विहिता परिचारिका ॥ ३४ ॥ ततः कृत्वैकदेशेन,
॥ ३३ ॥ युग्मम् । तत्तथेति भावेन, गृहीतं तेन तद्वचः । ददाति तद्दया तस्मै, त्रितयं तदहर्निशम् । कदन्ने मूर्च्छित-
भिक्षापात्रमनारतम् । तदेवं पालयन् कालं, कियन्तमपि संस्थितः ॥ ३५ ॥ यत्पुनस्तद्दयादत्तं, तद् व्रजत्युपदर्शताम् ॥ ३७ ॥
स्वाम्य, केवलं तत्र नादरः ॥ ३६ ॥ प्रायेण बहु भुङ्क्तेऽसौ, तन्मोहेन कुभोजनम् । महाकल्याणकं दत्तं, संभ्रमेण तया
अञ्जनं च तया प्रोक्तो, निधत्ते नेत्रयोः क्वचित् । तत्त्व तीर्थोदकं पातुं, तद्वचसैः प्रवर्त्तते ॥ ३८ ॥

१ तया नराः प्र. २ संप्रदायतयोक्तं ३ वर्हिणं. ४ विहितौषधक्रियाः. ५ लक्षते पा. ६ आदरवान्. ७ सेवाकारिणी. ८ पात्रम्. ९ यत्तु तद्दयया प्र.
१० व्यञ्जननाम् ११ तद्वचसात् प्र.

यद्रु । भुक्त्वाऽल्पं हेलया शेषं, कर्परे निदधाति सः ॥ ३९ ॥ तत्सांनिध्यगुणात्तच्च, तस्यान्नं संप्रवर्द्धते । अदतोऽहर्निशं तस्यान्निष्ठां नैव प्रपद्यते ॥ ४० ॥ ततो गाढतरं तुष्टो, वृद्धिं दृष्ट्वा स्वभोजने । न चासौ तद्विजानीते, यन्माहात्म्येन वर्द्धते ॥ ४१ ॥ केवलं तत्र गृद्धात्मा, त्रितये शिथिलादरः । जानन्नपि न जानाति, कालं नयति मोहितः ॥ ४२ ॥ अहर्निशमपथ्यं तद्भुञ्जानः कुक्षिमानतः । त्रितयेऽनादरेणा-स्वादी, न रोगोच्छेदभाजनम् ॥ ४३ ॥ तावन्मात्रेण भुक्तेन, किन्तु तस्य गुणो महान् । त्रैतत्रयेण ते रोगा, आनीता तेनैं याप्यताम् ॥ ४४ ॥ तथाप्यात्मज्ञताऽभावादुल्वणत्वादपथ्यतः । कश्चिद्विकारमात्मीयं दर्शयन्ति शरीरके ॥ ४५ ॥ कचिच्छूलं कचिद्दाहः, कचि-न्मूर्च्छा कचिज्ज्वरः । कचिच्छर्दिः कचिज्जाड्यं, कचिद् हृत्पार्श्ववेदना ॥ ४६ ॥ कचिदुन्मादसन्तापः, पथ्ये कचिदरोचकः । तै रोगैर्वि-क्रियापन्नैः, शरीरस्य प्रजायते ॥ ४७ ॥ युग्मम् । कदाचित्तद्दया दृष्ट्वा, तं विकारैरुपद्रुतम् । आक्रन्दन्तं कृपोपेता, संचिन्त्येत्थमभाषत ॥ ४८ ॥—कथितं तात! तातेन, यदन्नं तव वल्लभम् । एतन्निमित्तकाः सर्वे, रोगास्तवशरीरके ॥ ४९ ॥ तथापि दृष्टवृत्तान्ता, मा भूदा-कुलता तव । तद्भक्षयन्तं दृष्ट्वाऽपि, भवन्तं नैव वारये ॥ ५० ॥ परमस्वास्थ्यहेतौ ते, शैथिल्यं भेषजत्रये । एतत्तु रोचते तुभ्यं, सर्वस-न्तापकारणम् ॥ ५१ ॥ अधुना क्रन्दतो नास्ति, हेतुः स्वास्थ्यस्य कारकः । अपथ्येऽत्यर्थं सक्तानां, न लगत्येव भेषजम् ॥ ५२ ॥ अप-वादो ममाप्यत्र, यतस्ते परिचारिका । प्रत्यहं न च शक्नोमि, कर्तुं स्वास्थ्यं तवाधुना ॥ ५३ ॥ इतरः प्राह—यद्येवं, वारणीयस्त्वयाऽमुतः । अभिलाषातिरेकेण, न त्यक्तुं स्वयमुत्सहे ॥ ५४ ॥ कदाचित्त्वत्प्रभावेण, स्तोकस्तोकं विमुञ्चतः । सर्वत्यागेऽपि शक्तिर्मे, कदन्नस्य भवि-ष्यति ॥ ५५ ॥ साधु साधूदितं भैंद्र!, युक्तमेतद्भवादृशाम् । इत्युक्त्वाऽभिकमश्नन्तं, सा कदन्नं न्यवारयत् ॥ ५६ ॥ ततस्तत्परिहारेण,

१ यावत्तृप्ति. २ अनादरेण खादकः. ३ ततः ४ भैषजत्रयेण. ५ वत्स्यताम्. ६ अपथ्यस्य. ७ वत्स प्र.

रोगा यान्त्यस्य तानवम् । न जायतेऽधिका पीडा, लगत्यङ्गे च भेषजम् ॥ ५७ ॥ केवलं सा यदाऽभ्यर्णे, तदा पथ्येन तिष्ठति । अपथ्यमत्यभाति, जायते तेन यार्प्यता ॥ ५८ ॥ यदा तु सा विदूरस्था, लाम्पट्यात्तत्कदन्नकम् । भूरि निर्भेषजं सोऽत्ति, तेनैवाजीर्णेन पीड्यते ॥ ५९ ॥ इतश्च तद्दया तेन, धर्मबोधकरेण सा । प्रागेवाशेषलोकस्य, पालकत्वे नियोजिता ॥ ६० ॥ साऽनन्तसत्त्वसङ्घातव्यापारकरणोद्यता । तन्मूले कथिदेवाऽऽस्ते, शेषकालं स मुत्कलः ॥ ६१ ॥ अपथ्यभक्षणाऽऽसक्तः, स केनचिदवारितः । विकारैर्बाध्यते भूयस्ते दृश्यन्ते च मेण्ठकाः ॥ ६२ ॥ कदाचित्पीडितो दृष्टो, धर्मबोधकरेण सः । सोऽवादीत् किमिदं ? भद्र!, स चाशेषं न्यवेदयत् ॥ ६३ ॥ इयं हि तद्दया नित्यं, न मत्पार्श्वेऽवतिष्ठते । तद्वैकल्याच्च मे रोगाः, प्रभवन्ति विशेषतः ॥ ६४ ॥ तस्मान्नाथास्तथा यूयं, कुरुध्वं यत्नमुत्तमम् । यथा पीडा न मे देहे, स्वप्नान्तेऽप्युपजायते ॥ ६५ ॥ स प्राह—वत्स! ते पीडा, जायतेऽपथ्यसेवनात् । इयं तु तद्दया व्यग्रा, कर्मान्तरनियोगतः ॥ ६६ ॥ या वारणं विधत्ते ते, सदैवापथ्यभक्षतः । यदि स्यात्तादृशी काचित्, क्रियते परिचारिका ॥ ६७ ॥ केवलं त्वमनात्मज्ञः, पथ्यसेवापराङ्मुखः । कदन्नभक्षणोद्युक्तस्तस्य किं करवाणि ते ? ॥ ६८ ॥ इतरस्त्वाह—मा मैवं, नाथा! वदत साम्प्रतम् । नैवाहं युष्मदादेशं, लङ्घयामि कथञ्चन ॥ ६९ ॥ तदाकर्ण्य मनाग् ध्यात्वा, क्षणमात्रमवोचत । धर्मबोधकरस्तस्मै, हितायोद्यतमानसः ॥ ७० ॥ अस्ति मे वचनायत्ता, सद्बुद्धिर्नाम दारिका । तां ते करोमि निर्व्यग्रां, विशेषपरिचारिकाम् ॥ ७१ ॥ सा हि संनिहिता नित्यं, पथ्यापथ्यविवेचिका । तुभ्यमेव मया दत्ता, मा कार्षीश्चित्तवैक्लवम् ॥ ७२ ॥ केवलं सा विशेषज्ञा, वैपरीत्यविधायिनाम् । अनादरवतां पुंसां, नोपकाराय वर्तते ॥ ७३ ॥ यदि तेऽस्ति सुखाकाङ्क्षा, दुःखेभ्यो यदि ते भयम् । ततः सा वक्ति यत्किञ्चित्, कर्तुं युक्तं तदेवं ते

१ पुणं गिदपाति. २ यापना. प्र. ३ कदन्नेन. ४ रोरः. ५ सदैव प्र.

॥ ७४ ॥ एष एव ममादेशो, यत्तदादेशवर्त्तनम् । तस्यै न रोचते यस्तु, नैव मह्यं स रोचते ॥ ७५ ॥ अनेककार्ययुक्तापि, तद्दया कचिदेत्य ते । प्रतिजागरणं भद्र!, करिष्यत्यन्तराऽन्तरा ॥ ७६ ॥ केवलं परमार्थस्ते, कथ्यते हितकाम्यया । सद्बुद्धौ सततं यत्नः, कर्त्तव्यः सुखमिच्छता ॥ ७७ ॥ ये मूढाः सम्यगाराध्य, सप्रसादां न कुर्वते । एनां तेषां न राजेन्द्रो, नाहं नान्यः प्रसीदति ॥ ७८ ॥ अप्रसादहता नित्यं, जायन्ते दुःखभाजनम् । ते यतोऽन्यो न लोकेऽपि, हेतुरस्ति सुखप्रदः ॥ ७९ ॥ स्वाधीना वर्त्तते यस्माद्दूरस्था मद्विधादयः । तवेयं सुखहेतुत्वे, तस्मादाराद्धुमर्हसि ॥ ८० ॥ एवं भवतु तेनोक्ते, कृता सा परिचारिका । ततःप्रभृति निश्चिन्तो, धर्मबोधकरोऽभवत् ॥ ८१ ॥ यावदास्ते विनान्येषा, कतिचित्तस्य पार्श्वगा । तावद्यत्तत्र संपन्नं, तदिदानीं निबोधत ॥ ८२ ॥ अतिलौल्येन यः पूर्वं, खादन्नपि न तृप्यति । कदन्नं भूरि नैवास्ति, तस्य चिन्तापि तद्गता ॥ ८३ ॥ पूर्वाभ्यासात् कचिद्भुङ्क्ते, केवलं धृतिकारणम् । जायते न च तत्स्वास्थ्यं, विहन्याद् गृद्धभावतः ॥ ८४ ॥ योऽकार्षीदुपरोधेन, महता भेषजत्रयम् । स्वयं तस्य बलात्तस्मिन्, अभिलाषोऽभिवर्द्धते ॥ ८५ ॥ अहिते गृद्धभावेन, हिते चाभिनिवेशतः । यत्तदा तस्य संपन्नं, तदिदमभिधीयते ॥ ८६ ॥—बाधन्ते नैव ते रोगाः, शरीरं जातवानवाः । याऽपि पीडा भवेत् कापि, साऽपि शीघ्रं निवर्त्तते ॥ ८७ ॥ विज्ञातश्च सुखास्वादो, नष्टा बीभत्सरूपता । गाढं च वर्त्तते तोषः, स्वस्थत्वात्तस्य चेतसि ॥ ८८ ॥ अन्यदाऽत्यन्तहृष्टेन, मनसा रहसि स्थितः । सद्बुद्ध्या सार्द्धमेवं स, जल्पति स्म निराकुलः ॥ ८९ ॥—भद्रे! किमिदमाश्चर्यं, शरीरे मम वर्त्तते । एतद्दुःखाकरं पूर्वं, यत्सुखाकरतां गतम्? ॥ ९० ॥ सा प्राह ज्ञातमेतत्ते, सम्यक्पथ्यनिषेवणात् । समस्तदोषमूलेऽस्मिन्नहिते लौल्यवर्जनात् ॥ ९१ ॥ मत्सान्निध्याच्च ते भद्र!, भुञ्जानस्य कदन्नकम् । प्रागभ्यासवशाच्चित्ते, लज्जाऽत्यर्थं प्रजायते ॥ ९२ ॥

१ भये.—२ तवैतद. पा.

लज्जया तस्य सम्भोगोऽकार्यरूपः प्रकाशते । ततश्च गृह(द्य)योगेन, कामचारो निवर्त्तते ॥ ९३ ॥ ततस्तद्भुक्तमप्यङ्गे, नात्यर्थं रोगवर्द्धनम् ।
तेनैवाऽऽच्छादयंश्चैषा, जाता तव सुखासिका ॥ ९४ ॥ इतरस्त्वाह—यद्येवं, सर्वथाऽपि त्यजाम्यहम् । अदः कदन्नं मे येन, जायते सुख-
मुत्तमम् ॥ ९५ ॥ सा त्वाह—युज्यते किन्तु, सम्यगालोच्य संत्यज । मा भूत्ते स्नेहदोषेण, प्रागिवाऽऽकुलता पुनः ॥ ९६ ॥ यदि त्यक्ते
पुनस्तेऽत्र, स्नेहावन्धोऽनुवर्त्तते । ततोऽत्यागो वरः कस्मात्?, स्नेहोऽस्मिन्रोगवर्धकः ॥ ९७ ॥ अल्पाल्पमश्नतोऽप्येतद्भेषजत्रयसेवनात् ।
माम्यतां याप्यता तेऽस्मिन्, साऽपि चात्यन्तदुर्लभा ॥ ९८ ॥ सर्वत्यागं पुनः कृत्वा, यः स्यात्तदभिलापुकः । याप्यतामपि नाप्नोति, स महा-
मोहदोषतः ॥ ९९ ॥ तदेतत्सम्यगालोच्य, यदि चेतसि भासते । ततोऽस्य सर्वथा त्यागो, युज्यते कर्तुमुत्तमैः ॥ ४०० ॥ सद्बुद्धेस्तद्वचः
श्रुत्वा, मनाग् दोलायितं मनः । तस्य किं करवाणीति, नास्ति सम्यग् विनिश्चयः ॥ १ ॥ अन्यदा परिभुञ्जानैर्महाकल्याणकं बहु । तत्
कदन्नं ततस्तेन, प्राशितं लीलया किल ॥ २ ॥ ततः सदन्नतृप्तत्वात्, सद्बुद्धेः सन्निधानतः । ततश्च तैर्गुणैश्चित्ते, तदानीं प्रतिभासते
॥ ३ ॥—अहो कुथितमत्यर्थं, लज्जनीयं मलाविलम् । बीभत्सं विरसं निन्द्यं, सर्वदोषौघभाजनम् ॥ ४ ॥ इदं मे भोजनं मोह-
मथाऽपि न निवर्त्तते । नैतत्त्यागादृते मन्ये, निर्व्यमं सुखमाप्यते ॥ ५ ॥ युग्मम् । त्यक्तेऽपि पूर्वलौल्येन, कदाचिन्मे स्मृतिर्भवेत् । स-
मुद्रा माऽपि दुःखौघकारिणीति निवेदितम् ॥ ६ ॥ अत्यक्ते दुःखजलधौ, सर्वदा स्थेयमञ्जसा । तदत्र किं करोमीति, पापोऽहं सत्त्वव-
र्जितः ? ॥ ७ ॥ अथवा—किमेतैः क्रियते मोहादालजालविचिन्तनैः । मुञ्चामि सर्वथाऽपीदं, यद्भाव्यं तद्भविष्यति ॥ ८ ॥ यद्वा किमत्र
मद्भाव्यं ?, न भवत्येव मे स्मृतिः । को नाम राज्यमासाद्य, स्मरेच्चण्डालरूपताम् ? ॥ ९ ॥ एवं निश्चित्य तेनोक्ता, सद्बुद्धिः क्षालयस्व मे ।

१ मनः प्र २ मैं० प्र.

द्रमकस्य-
शुभसं-
कल्पाः
४०४-४२२

भद्रे[1] भाजनमेतत्त्वं, हित्वा सर्वं कदन्नकम् ॥ १० ॥ तयोक्तं—पृच्छयतां तावद्धर्मबोधकरस्त्वया । काले न विक्रियां याति, सम्यगालोच्य यत् कृतम् ॥ ११ ॥ ततः सहैव सद्बुद्ध्या, धर्मबोधकरान्तिके । गत्वा सर्वोऽपि वृत्तान्तस्तेन तस्मै निवेदितः ॥ १२ ॥ साधु साधु कृतं भद्र!, धर्मबोधकरोऽब्रवीत् । केवलं निश्चयः कार्यो, येन नो यासि हास्यताम् ॥ १३ ॥ सोऽवादीत् किमिदं नाथा!, भूयो भूयो विकथ्यते । एष मे निश्चयस्तस्मिन्न मनोऽपि प्रवर्त्तते ॥ १४ ॥ ततोऽशेषजनैः सार्द्धं, पर्यालोच्य विचक्षणः । अत्याजयत्स तत्पात्रं, सज्जलैः पर्यशोधयत् ॥ १५ ॥ महाकल्याणकस्योच्चैस्तत् पुनः पर्यपूरयत् । प्रमोदातिशयात्तत्र, दिने वृद्धिमकारयत् ॥ १६ ॥ धर्मबोधकरो हृष्टस्तद्दया प्रमदोद्धुरा । सद्बुद्धिर्वर्द्धितानन्दा, मुदितं राजमन्दिरम् ॥ १७ ॥ प्रवृत्तश्च जने वादो, योऽयं राज्ञाऽवलोकितः । धर्मबोधकरस्येष्टस्तद्दयापरिपालितः ॥ १८ ॥ सद्बुद्ध्याऽधिष्ठितो नित्यमपथ्यत्यागकारकः । भेषजत्रयसेवित्वाद्रोगौघैर्मुक्तकल्पकः ॥ १९ ॥ स नो निष्पुण्यकः किन्तु, महात्मैष सपुण्यकः । ततस्तदेव संजातं, नामास्येति सपुण्यकः ॥ २० ॥ त्रिभिर्विशेषकम् । कुतः पुण्यविहीनानां, सामग्री भवतीदृशी? । जन्मदारिद्र्यभाग् नैव, चक्रवर्त्तित्वभाजनम् ॥ २१ ॥ सद्बुद्धिस्तद्दयायोगात्तिष्ठति राजमन्दिरे । ततः प्रभृति यत्तस्य, संपन्नं तन्निबोधत ॥ २२ ॥ अपथ्याभावतो नास्ति, पीडा देहे परिस्फुटा । कचित्सूक्ष्माऽल्पकाला च, यदि स्यात्पूर्वदोषजा ॥ २३ ॥ ततः स्वयं गताकाङ्क्षो, लोकव्यापारशून्यधीः । विधत्ते विमलालोकं, नेत्रयोरञ्जनं सदा ॥ २४ ॥ तत्त्वप्रीतिकरं तोयं, पिबत्यश्रान्तमानसः । महाकल्याणकं भुङ्क्ते, तत्सदन्नमनारतम् ॥ २५ ॥ ततो बलं धृतिः स्वास्थ्यं, कान्तिरोजः प्रसन्नता । बुद्धिपाटवमक्षाणां, वर्द्धतेऽस्य प्रतिक्षणम् ॥ २६ ॥ नाद्यापि सम्यगारोग्यं, बहुत्वाद्रोगसन्ततेः । जायते केवलं देहे, विशेषो दृश्यते महान् ॥ २७ ॥ यः प्रेतभूतः प्रागासीद्गाढं बीभत्सदर्शनः ।

1 तिष्ठते प्र.

विलम्बितेनात्र, संसार इतिभाषिणा ॥ २६ ॥ ततः प्रवचनोक्तेन, विधिना धूतकल्मषैः । सर्वे ते क्षणमात्रेण, दीक्षिता गुरुभिर्जनाः ॥२७॥
अथ संवेगवृद्ध्यर्थं, कल्पोऽयमिति वा क्षणम् । कृता समक्षं लोकस्य, सूरिभिर्धर्मदेशना ॥२८॥ तद्यथा—"अनाद्यनन्तसंसारे, जन्ममृत्युभया-
"केर । मौनीन्द्री दुर्लभा सत्त्वैः, प्रव्रज्येयं सुनिर्मला ॥२९॥ यतः—तावद्दुःखान्यनन्तानि, तावद्रागादिसन्ततिः । प्रभवः कर्मणस्तावत्तावज्ज-
"न्मपरम्परा ॥ ३० ॥ विपदस्तावदेवैतास्तावत्सर्वा विडम्बनाः । तावद्दीनानि जल्पन्ति, नरा एव पुरो नृणाम् ॥३१॥ तावद्दौर्गत्यसद्भाव-
"स्तावद्रोगसमुद्भवः । तावदेष बहुक्लेशो, घोरसंसारसागरः ॥३२॥ यावन्निःशेषसावद्ययोगोपरतिलक्षणा । एषा न लभ्यते जीवैः, प्रव्रज्या-
"ऽत्यन्तदुर्लभा ॥ ३३ ॥ चतुर्भिः कलापकं ॥ प्रसादाल्लोकनाथस्य, स्वकर्मविवरेण च । यदा तु सत्त्वैर्लभ्येत, प्रव्रज्येयं जिनोदिता ॥ ३४ ॥
"तदा निर्धूय पापानि, यान्ति ते परमां गतिम् । अनन्तानन्दसंपूर्णां, निःशेषक्लेशवर्जिताम् ॥ ३५ ॥ युग्मम् । ततोऽमी ये पुरा प्रोक्ताः,
"सर्वेऽपि भवभाविनः । क्षुद्रोपद्रवसंघाता, दूरापास्ता भवन्ति ते ॥ ३६ ॥ किं च—इहापि भो भवन्त्येव, प्रशमामृतपायिनः । प्रव्रज्या-
"ग्राहिणो जीवा, निर्बाधाः सुखपूरिताः ॥ ३७ ॥ सा च भागवती दीक्षा, युष्माभिरधुना स्फुटम् । संप्राप्ता तेन संप्राप्तं, यत्प्राप्तव्यं भवो-
"दधौ ॥ ३८ ॥ केवलं सततं यत्नः, प्रमादपरिवर्जितैः । यावज्जीवं विधातव्यो, भवद्भिरिदमुच्यते ॥३९॥ यतः—नाधन्याः पारमेतस्या,
"गच्छन्ति पुरुषाधमाः । ये तु पारं व्रजन्त्यस्यास्त एव पुरुषोत्तमाः ॥ ४० ॥" ततस्तैः प्रणतैः सर्वैर्जजल्पे सूरिसंमुखम् । इच्छामोऽनुमहं
नाथ!, कुर्मो नाथानुशासनम् ॥४१॥ स्थगिताननदेशेन, मुखवस्त्रिकया मुदा । अत्रान्तरे कृतः प्रश्नः, शत्रुमर्दनसाधुना ॥ ४२ ॥ कथम् ?
—विशालं निर्मलं धीरं, गम्भीरं गुरुदक्षिणम् । दयापरीतं निश्चिन्तं, द्वेषाभिष्वङ्गवर्जितम् ॥ ४३ ॥ स्तिमितं जगदानन्दं, यद्वा वाग्गो-
चरातिगम् । कथमीदृग्भवेच्चित्तं, नाथ! यादृग् मनीषिणः ? ॥ ४४ ॥ युग्मम् । यस्य चेष्टितमालोक्य, शिथिलीभूतबन्धनाः । एते सर्वे

भागवतीं दीक्षामङ्गीकुर्मः सुनिर्मलाम् ॥८॥ नृपतिरुवाच—अहो विवेको युष्माकमहो गम्भीरचित्तता । अहो वचनविन्यासस्तथाऽहो सत्त्वसारता ॥९॥ साध्वध्यवसितं भद्रैः, साधु प्रोत्साहिता वयम्। साधु भोः क्षणमात्रेण, त्रोटितं भवपञ्जरम् ॥१०॥ एवं सामान्यतस्तावत्, सर्वेषामभिनन्दनम् । कृत्वा प्रत्येकमप्याह, स राजा हर्षनिर्भरः ॥ ११ ॥ तत्र सुबुद्धिं तावदुवाच—सखे! विदितसंसारस्वभावेन त्वया गृहे । इयन्तं तिष्ठता कालं, वयमेव प्रतीक्षिताः ॥ १२ ॥ अन्यथा ते गृहे किं वा, स्यादवस्थानकारणम्? । को नाम राज्यलाभेऽपि, भजेच्चाण्डालरूपताम्? ॥ १३ ॥ तत्साधु विहितं साधु, कृतोऽस्माकमनुग्रहः । एवमाचरता मित्र!, दर्शिता च सुमित्रता ॥ १४ ॥ मध्यमबुद्धिं प्रत्याह—त्वमादावेव धन्योऽसि, यस्य सङ्गो मनीषिणा । नैव कल्पद्रुमोपेतो, नरोऽकल्याणमर्हति ॥ १५॥ अधुना परितेऽप्यस्य, दधानेन मतिं त्वया । स्वभ्रातुर्निर्विशेषेयं, दर्शिता तुल्यरूपता ॥ १६ ॥ तत्साधु विहितं भद्र!, यः पश्चादपि सुन्दरः । सोऽपि सुन्दर एवेति, यतो वृद्धाः प्रचक्षते ॥ १७ ॥ ततो मदनकन्दलीं प्रत्याह—सारं च सुकुमारं च, देवि! काञ्चनपद्मवत् । तावकीनमिदं चित्तं, येनाङ्गीकृतमीदृशम् ॥ १८ ॥ प्रसिद्धा धर्मपत्नीति, यत्त्वं लोकोपचारतः । मम तत्सत्यतां नीतं, कर्तव्येन त्वयाऽधुना ॥ १९ ॥ तत्साधु विहितं देवि!, नास्त्यत्र भवपञ्जरे । नियन्त्रितानां जीवानां, कर्तव्यमपरं वरम् ॥ २० ॥ तथा—यैरभ्युपगता दीक्षा, तानन्यानपि भावतः । स राजा मधुरैरेवं, वाक्यैरानन्द्य तोषतः ॥ २१ ॥ तद्यथा—धन्या यूयं महात्मानः, कृतकृत्या नरोत्तमाः । यैरभ्युपगता तूर्णं, सद्दीक्षा पारमेश्वरी ॥ २२ ॥ तच्चारु विहितं भद्रा!, युक्तमेतद्भवादृशाम् । यूयमेव परं लोके, निर्मिथ्या मम बान्धवाः ॥ २३ ॥ ततश्च—राजचिह्नार्पणाद्राज्ये, स्थापयित्वा सुलोचनम् । ततः कृतान्यकर्तव्यः, प्रविष्टो जिनमन्दिरे ॥ २४ ॥ तत्र च—विहिताशेषकर्तव्याः, पूजयित्वा जगद्गुरुम् । आचार्येभ्यो निजाकूतं, ते सर्वेऽप्याचचक्षिरे ॥ २५ ॥ ततोऽभिनन्दितास्तेऽपि, सूरिभिः कलया गिरा । अलं

ततः प्रवचनोक्तेन, विधिना धूतकल्मषैः । सर्वे ते क्षणमात्रेण, दीक्षिता ...
विलम्बितेनात्र, संसार इतिभाषिणा ॥ २६ ॥ कृता समक्षं लोकस्य, सूरिभिर्धर्मदेशना ॥२८॥ तद्यथा—"अनाद्यनन्तसंसारे, जन्ममृत्युभया-
अथ संवेगवृद्ध्यर्थं, कल्पोऽयमिति वा क्षणम् । "कर । मौनीन्द्री दुर्लभा सत्त्वैः, प्रव्रज्येयं सुनिर्मला ॥२९॥ यतः—तावद्दुःखान्यनन्तानि, तावद्रागादिसन्ततिः । प्रभवः कर्मणस्तावत्तावज्ज-
"न्मपरम्परा ॥ ३० ॥ विपदस्तावदेवैतास्तावत्सर्वा विडम्बनाः । तावद्दीनानि जल्पन्ति, नरा एव पुरो नृणाम् ॥३१॥ तावद्दौर्गत्यसद्भाव-
"स्तावद्रोगसमुद्भवः । तावदेव महाक्लेशो, घोरसंसारसागरः ॥३२॥ यावन्निःशेषसावद्ययोगोपरतिलक्षणा । एषा न लभ्यते जीवैः, प्रव्रज्या-
"ऽत्यन्तदुर्लभा ॥ ३३ ॥ चतुर्भिः कलापकं ॥ प्रसादाल्लोकनाथस्य, स्वकर्मविवरेण च । यदा तु सत्त्वैर्लभ्येत, प्रव्रज्येयं जिनोदिता ॥ ३४ ॥
"तदा निर्धूय पापानि, यान्ति ते परमां गतिम् । अनन्तानन्दसंपूर्णां, निःशेषक्लेशवर्जिताम् ॥ ३५ ॥ युग्मम् । ततोऽमी ये पुरा प्रोक्ताः,
"सर्वेऽपि भवभाविनः । क्षुद्रोपद्रवसंघाता, दूरापास्ता भवन्ति ते ॥ ३६ ॥ किं च—इहापि भो भवन्त्येव, प्रशमामृतपायिनः । प्रव्रज्या-
"ग्राहिणो जीवा, निर्बाधाः सुखपूरिताः ॥ ३७ ॥ सा च भागवती दीक्षा, युष्माभिरधुना स्फुटम् । संप्राप्ता तेन संप्राप्तं, यत्प्राप्तव्यं भवो-
"दधौ ॥ ३८ ॥ केवलं सततं यत्नः, प्रमादपरिवर्जितैः । यावज्जीवं विधातव्यो, भवद्भिरिदमुच्यते ॥३९॥ यतः—नाधन्याः पारमेतस्या,
"गच्छन्ति पुरुषाधमाः । ये तु पारं प्रजन्त्यस्यास्त एव पुरुषोत्तमाः ॥ ४० ॥" ततस्तैः प्रणतैः सर्वैर्जजल्पे सूरिसंमुखम् । इच्छामोऽनुमहं
नाथ!, कुर्मो नाथानुशासनम् ॥४१॥ स्थगिताननदेशेन, मुखवस्त्रिकया मुदा । अत्रान्तरे कृतः प्रश्नः, शत्रुमर्दनसाधुना ॥ ४२ ॥ कथम्?
—विशालं निर्मलं धीरं, गम्भीरं गुरुदक्षिणम् । दयापरीतं निश्चिन्तं, द्वेषाभिष्वङ्गवर्जितम् ॥ ४३ ॥ स्तिमितं जगदानन्दं, यद्वा वाग्गो-
चरातिगम् । कथमीदृग्भवेच्चित्तं, नाथ! यादृग् मनीषिणः? ॥ ४४ ॥ युग्मम् । यस्य चेष्टितमालोक्य, शिथिलीभूतबन्धनाः । एते सर्वे

भागवतीं दीक्षामङ्गीकुर्मः सुनिर्मलाम् ॥८॥ नृपतिरुवाच—अहो विवेको युष्माकमहो गम्भीरचित्तता । अहो वचनविन्यासस्तथाऽहो सत्त्वसारता ॥९॥ साध्वध्यवसितं भद्रैः, साधु प्रोत्साहिता वयम् । साधु भोः क्षणमात्रेण, त्रोटितं भवपञ्जरम् ॥१०॥ एवं सामान्यतस्तावत्, सर्वेषामभिनन्दनम् । कृत्वा प्रत्येकमप्याह, स राजा हर्षनिर्भरः ॥ ११ ॥ तत्र सुबुद्धिं तावदुवाच—सखे! विदितसंसारस्वभावेन त्वया गृहे । इयन्तं तिष्ठता कालं, वयमेव प्रतीक्षिताः ॥ १२ ॥ अन्यथा ते गृहे किं वा, स्यादवस्थानकारणम्? । को नाम राज्यलाभेऽपि, भजेच्चाण्डालरूपताम्? ॥ १३ ॥ तत्साधु विहितं साधु, कृतोऽस्माकमनुग्रहः । एवमाचरता मित्र!, दर्शिता च सुमित्रता ॥ १४ ॥ मध्यमबुद्धिमत्याह—त्वमादावेव धन्योऽसि, यस्य सङ्गो मनीषिणा । नैव कल्पद्रुमोपेतो, नरोऽकल्याणमर्हति ॥ १५॥ अधुना चरितेऽप्यस्य, प्रधानेन मतिं त्वया । स्वभ्रातुर्निर्विशेषेयं, दर्शिता तुल्यरूपता ॥ १६ ॥ तत्साधु विहितं भद्र!, यः पश्चादपि सुन्दरः । सोऽपि सुन्दर एवेति, यतो वृद्धाः प्रचक्षते ॥ १७ ॥ ततो मदनकन्दलीं प्रत्याह—सारं च सुकुमारं च, देवि! काञ्चनपद्मवत् । तावकीनमिदं चित्तं, येनाङ्गीकृतमीदृशम् ॥ १८ ॥ प्रसिद्धा धर्मपत्नीति, यस्त्वं लोकोपचारतः । मम तत्सत्यतां नीतं, कर्तव्येन त्वयाऽधुना ॥ १९ ॥ तत्साधु विहितं देवि!, नास्त्यत्र भवपञ्जरे । नियन्त्रितानां जीवानां, कर्तव्यमपरं वरम् ॥ २० ॥ तथा—यैरभ्युपगता दीक्षा, तानन्यानपि भावतः । स राजा मधुरैरेवं, वाक्यैरानन्द्य तोषतः ॥ २१ ॥ तद्यथा—धन्या यूयं महात्मानः, कृतकृत्या नरोत्तमाः । यैरभ्युपगता तूर्णं, सद्दीक्षा पारमेश्वरी ॥ २२ ॥ तच्चारु विहितं भद्रा!, युक्तमेतद्भवादृशाम् । यूयमेव परं लोके, निर्मिथ्या मम बान्धवाः ॥ २३ ॥ ततश्च—राजचिह्नार्पणाद्राज्ये, स्थापयित्वा सुलोचनम् । ततः कृतान्यकर्तव्यः, प्रविष्टो जिनमन्दिरे ॥ २४ ॥ तत्र च—विहिताशेषकर्तव्याः, पूजयित्वा जगद्गुरुम् । आचार्येभ्यो निजाकूतं, ते सर्वेऽप्याचचक्षिरे ॥ २५ ॥ ततोऽभिनन्दितास्तेऽपि, सूरिभिः कलया गिरा । अलं

तथा ' सत्यां ' भवतः ' व्याधितप्रभृतीनां पुरतः प्रतिपादयतः, अन्यथा तु वैद्यान्तरवचनेन विसंवाद इति भावः, तथा ' राज्ञोऽपि ' नृपस्यापि भृत्यादिसंबन्धिनमपराधम्–दूषणं ' यथास्फुटं ' येन प्रकारेण व्यक्ततया चौरादेः सकाशात्प्रतीतं तथैव ' व्याकुर्वाणस्य ' अभिदधत इति । अत्र च भवात इत्यनुवृत्तावपि व्याकुर्वाणस्येत्यभिधानं न दुष्टम्, भिन्नवाक्यत्वात्, एवं पूर्वगाथायामपि, लोभ–द्वेषादिना त्वन्यथा प्रकाशने परादिवचनाविसंवाद इति । वचनविसंवादाविसंवादयोश्च दोष-गुणा लोकप्रकटा एव । तथा चोक्तम्—" अनृतवचनवादी चेत्प्रतीतः पुरा, असौ तदनु यदि सत्यं दैवयोगाद् ब्रवीति तदनृतमिति लोके प्रत्ययः, लाघवं स्याद्, भवति पुनरवज्ञा, तद्वतो जीवितं किम् ? । तथा–संपदेरप्रचलवचसां कीर्ति–धर्मा–ऽर्थ–कामाः, कामं लोका विहितमहितात्मीयभावाः समस्ताः । त्यक्त्वा शङ्कां धनमिव निजं गुह्यमावेदयन्ति, सर्वे यद्वा गुरुगुणगणाः सत्यभाजो भवन्ति ॥ १ । इति गाथार्थः ॥ ४ ॥

वचनाविसंवादफलत्वात् क्रियाऽविसंवादस्य, इति तदनन्तरं तमेव धर्मविषयं तावदाह—

**किरियाअविसंवाओ, धम्मे जह पन्नवेइ तह कुणइ । गिहिणो किरियं इयरं, जईसु संदंसणाहिंतो ॥५॥**

व्याख्या—' क्रियाऽविसंवादः ' प्रागुक्तशब्दार्थः, स च ' धर्मे ' धर्मविषये, कथम् ? इत्याह—' यथा प्रज्ञापयति ' हि–श्रादिभाष्यमध्ये प्ररूपयति श्रावकः सुगुरूपदेशानुसारेण ' तथैव ' प्ररूपणानुसारेण ' करोति ' विधत्ते । ' गृहिणः ' श्रावकस्य ' क्रियां ' सामाचारीं–देवपूजादिद्रव्यस्तवरूपाम्, ' इतराम् ' अन्यां ' संदंसणाहिंतो ' त्ति—सद्दर्शनात् सम्य-

क्त्वात्सकाशात्, ' यतिषु ' इति यतीनां संबन्धिन्या इत्यर्थः । सम्यक्त्वं हि यतीनां श्रावकाणां च यावज्जीवं त्रिविधं त्रिविधेन मिथ्यात्वपरिहारेणैव शुद्धं भवति, शेषा च क्रिया भावस्तवरूपा साधूनां, श्राद्धानां तु द्रव्यस्तवरूपा । ततश्चासौ श्रावको यतीनां सम्यक्त्वमेकं विहाय शेषां यतिक्रियाया अन्यां प्ररूपयति करोति चेति करणाविसंवादः, अन्यथा तु प्ररूपणा-क्रिययोर्विसंवाद इति गाथार्थः ॥ ५ ॥

अथ तमेव व्यवहारविषयं दर्शयन्नुपायाविसंवादमपि शेषपुरुषार्थसाधकतमत्वेन प्राधान्याद्धर्मस्य तद्विषयं तावत् प्रस्तौति—

**ववहारे पुण ऊणं, न देइ पडिरूवगं नवा कुणइ । जाणइ उवायमूलं, धम्मस्स य तं तहायरइ ॥ ६ ॥**

व्याख्या—धर्मे तावदुक्तः करणाविसंवादो, ' व्यवहारे ' क्रय-विक्रयादिरूपे ' पुनरूनं ' प्रस्तुतमूल्यलभ्यादतिहीनं वस्तु ' न ददाति ' नैव ग्राहकस्य प्रयच्छतीति । ' प्रतिरूपः ' सदृशो व्रीह्यादेरिव पलिञ्जादिः, स एव प्रतिरूपकः, तेन व्यवहारोऽप्युपचारात् प्रतिरूपकः, तं ' न करोति ' न विधत्ते यदि तदा क्रियाऽविसंवाद इत्यर्थः । तथा ' जानाति ' बुध्यते ' उपायाः ' साधनानि तेषामपि ' मूलम् ' आद्यं—वक्ष्यमाणदानादिकं ' धर्मस्य ' पुण्यस्य, चशब्दः पूर्वोऽविसंवादसमुच्चयार्थः । ज्ञात्वा च तदुपायमूलं ' तथैव ' ज्ञातानुसारेण ' आचरति ' व्यापारयति; धर्मादावुपेये दानादिकमेवोपायं व्यापारयन्नुपायाऽविसंवादीति गाथार्थः ॥ ६ ॥

धर्मोपायानेवाह—

दाणं सीलं च तवो, भावणमाईहिं सिज्झए धम्मो । दाणाणमभयदाणं, जिणदाणं साहुदाणं च ॥७॥

व्याख्या—' दानं ' वितरणं, ' शीलं ' मनःसमाधानं, ' तपो ' अनशनादिकं, ' चः ' समुच्चयार्थोऽत्र योज्यः, एते धर्मोपायाः । तथा ' भावना ' अनुमोदनादिप्रधानविशुद्धात्मपरिणामरूपा तत्त्वपरिच्छेदाभ्यासरूपा वा, सा आदिर्येषां त्यागादीनां तैः, किमित्याह—' सिध्यति ' निष्पद्यते ' धर्मः ' श्रेयः । इह च भावनाया दानादिभ्यो भेदेन शेषगुणसंग्राहकाऽऽदिपदसंबद्धत्वेन चोपादानं सर्वेषामप्येषां भावनासनाथानामेव विशिष्टफलसाधकत्वख्यापनार्थम् । दानं चाऽनेकधा, इति विशिष्टविषयं तदाह—' दानानां वितरणानां मध्ये विशिष्टमिति शेषः, ' अभयदानं ' सत्त्वाऽव्यापादनसंकल्पः, जिनदानं साधुदानं च तदुद्देशेन वितरणम् इति गाथार्थः ॥ ७ ॥

जीवितादिभयभीतानां भयापहरणप्रतिहरणलक्षणतया सुप्रसिद्धत्वादभयदानस्य तदुपेक्ष्य जिनदानमेवाह—

कुसुमाभरणविलेवण,-सुगंधिधूयाइ होइ जिणदाणं । कारावणं च चेई,-हराण तह य वरबिंबाणं ॥८॥

व्याख्या—' कुसुमानि ' जात्यादिपुष्पाणि, ' आभरणानि ' मुकुटाद्यलंकरणानि, ' विलेपनं ' चन्दनादिसमालम्भनं, ' सुगन्धिधूपः ' सुरभिकर्पूरागुरुप्रभृतिद्रव्यसंघातः; ततः कुसुमानि चेत्यादिद्वन्द्वः । आदिशब्दाद् वास-वस्त्र-

एवं वक्ष्यमाणदानेष्वपि । तथा
स्नात्रादिग्रहः । एवञ्चवति ' जिनदानं ' तीर्थकरविषयं वितरणं धर्मोपाय इति योगः । 
' कारणं ' विधापनं ' चैत्यगृहाणां ' जिनमन्दिराणां, ' चः ' अनुक्तसमुच्चये, तेन प्रतिष्ठा-यात्रादिविधापनपरिग्रहः ।
तथेति समुच्चये, ' प्रवरबिम्बानां ' मनोहरजिनप्रतिमानामिति । प्रवरपदं बिम्बपदसमस्तमपि पुष्पादिविशेषणतयाऽपि योज्यं,
योग्यत्वात्, तादृशामेव पुष्पादीनां भावोल्लासनिमित्तत्वात् । इति गाथार्थः ॥ ८ ॥

एवं परमोत्तमपात्रविषयं दानमभिधाय, अथ गुणतारतम्येनोत्तममध्यमहीनपात्राणां साध्वादीनां क्रमेणाऽभिधित्सुः साधुदानविशेषमाह—

**साहूण वसहिदाणं, ओसह-भेसज्ज-वत्थ-पत्ताणं । आहारस्स जहाविहि, दाणं साहूणमुचियस्स ॥९॥**

व्याख्या—' साधुभ्यो ' भावयतिभ्यो ' वसतिदानम् उपाश्रयवितरणम्, आदावेव पार्थक्येन चोपादानं शेषदाना-
नामप्येतद्दानहेतुकतया विशिष्टतरोपष्टम्भनिमित्तत्वाद् अस्य प्राधान्यख्यापनार्थम् । श्रूयते हि—" जो देइ उवस्सयं मुणि-
वराण, तव-नियम-बंभ-जुत्ताणं । तेणं दिन्ना वत्थ-ऽन्न,—पाण-सयणा-सण वियप्पा ॥ १ ॥ " ' औषधं ' नाग-
रादि, ' भैषज्यं ' नागर-मरिचादिमेलकः, ' वस्त्र-पात्रे ' प्रतीते, ततो द्वन्द्वः, तेषाम् । तथा ' आहारस्य ' अशनादेः ।
सर्वेषां चैषां दानं ' यथाविधि ' संभ्रमातिशय-सुपात्र-शुद्धदेयाद्यन्वेषणरूपसूत्रोपदेशानतिक्रमेण । तथा चोच्यते—" अभि-
मुहगमणं आसण,-वंदणमह संविभागदाणं च । पुणरवि वंदण अणुवयण, सक्कारो छव्विहो एस ॥ १ ॥ " तथा पात्र-

प्रथमगुणैरलंकृतं, दायकोऽपि पुलकं दधचंनी, देयवस्तु परिशुद्धं, पुष्कलतपसामिदं फलमिति । सर्वानुष्ठानेषु विधेरभिमता-
पादकत्वेऽपि यद् साधुदानेऽभिधानं विशेषतस्तद् यथाकथंचित्तेभ्यो दत्तं महाफलमेवेत्यधुनातनसातशीलदेशनानिराकर-
णार्थमिति मन्तव्यम् । साधूनामुचितस्यैव यतिजनयोग्यस्य वस्त्राहारादेः, न सुवर्णादेः, तस्यापि प्रासुकैषणीयस्येत्यर्थः ।
अथवा साधूनां शोभनानाम्, इत्यौषधादीनामेव विशेषणम् । इति गाथार्थः ॥ ९ ॥

अथ साधर्मिकानुकम्पादाने प्राह—

**साहम्मियाण दाणं, अहीणधम्माण तह विसेसेणं । दीणाईणणुकंपा,–दाणं धम्मस्सुवाउत्ति ॥१०॥**

व्याख्या—' साधर्मिकेभ्यः ' समानदेव–गुरुप्रतिपत्तिमद्भ्यः श्रावकेभ्यो ' दानं ' बन्धुबुद्ध्या वस्त्रा–ऽऽहारादिवि-
तरणम् । तथा चोक्तम्—" दीनानाथसधर्मचारिणि जने संमानदानादिभिः, यः सज्ञातिकुलेप्सितेऽपि विधिना सद्बन्धु-
बुद्ध्या भृशम् । वात्सल्यं विदधाति कारयति वा धर्मप्रशंसास्पदं, स श्राद्धः कथितो विवेकमहतामेकः सतामग्रणीः ॥१॥"
' अहीनधर्मेभ्यश्च ' संपूर्ण–विशुद्धाणुव्रताद्यनुष्ठानेभ्यः । तथेति समुच्चयार्थो योजित एव । ' विशेषेण ' अतिशयेन विशि-
ष्टतरमित्यर्थः । एतस्यैव च सम्यक्त्वाचारेषु वात्सल्यरूपतया महाफलता गीयते । तदुक्तम्—" साहम्मियथिरकरणं,
वच्छल्लं सासणस्स सारोत्ति । मग्गसहायत्तणओ, तहा अणासो य धम्माओ ॥ १ ॥ " तथा ' दीनादीनां ' निःस्व–
निर्नाथ–रोगार्त्तप्रभृतीनाम् ' अनुकम्पादानं ' करुणामात्रेण तदुचितवस्तुवितरणम् । उपलक्षणं चैतत्, तेन गृहागतस्य

सर्वस्य भिक्षाचरादेरुचितदानं ज्ञानदानं च, किम् ? इत्याह—' धर्मस्योपायः ' पुण्यस्य साधकतमम् । ' इति ' शब्दो दानलक्षणधर्मोपायपरिसमाप्तौ । इति गाथार्थः ॥ १० ॥

अथ शीलादित्रयमाह—

**सीलं चित्तसमाहाण–सो उ सामाइयाइकरणेण । होइ चउत्थाइ तवो, भावण नेया दुवालसहा ॥११॥**

व्याख्या—' शीलं ' तु सदाचारः । पुनः किम् ? इत्याह—' चित्तसमाधानं ' विशुद्धान्तःकरणैकाग्र्यम् । ' ओ ' इति निपातः पादपूरणे, ' तुः ' पुनरर्थो योजित एव । ' सामायिकादिकरणेनेति ' समस्य–रागादिरहितस्य सत आयो–ज्ञानादीनां लाभः समायः, स एव विनयादेराकृतिगणत्वाद् इकण्प्रत्यये सामायिकं–सर्वसावद्ययोगविरतिपरिणामः, तत्पूर्वकमनुष्ठानं च । आदिशब्दाद्देशविरतिपरिणामादिग्रहः, तस्य करणं–विधानं प्रतिपत्तिरिति यावत्, तेन करणभूतेन ' भवति ' वर्तते ज्ञेयमित्येवंरूपतयाऽत्र वक्ष्यमाणक्रियायोगः । तथा ' चतुर्थं ' भोजनचतुष्टयत्यागलक्षणम् एकोपवासरूपमागमप्रसिद्धम्, आदिशब्दात् षष्ठाऽष्टमादिपरिग्रहः । तत्किम् ? इत्याह—' तप ' इति निराशंसविशुद्धाध्यवसायेन बाह्याभ्यन्तरतनुतापकानुष्ठानविशेषः । तथा ' भावना ' पूर्वोक्तस्वरूपानुप्रेक्षा ' ज्ञेया ' ज्ञातव्या श्रावकेण ' द्वादशधेति ' द्वादशप्रकारा । तदुक्तम्—भावयितव्यमनित्यत्वमशरणत्वं तथैकतान्यत्वमशुचित्वं संसारः कर्माश्रवः संवरविधिश्च निर्जरा लोकविस्तरः धर्मस्वाख्याततत्त्वचिन्ता च बोधेः सुदुर्लभत्वं च भावना द्वादश विशुद्धाः । एवं दानादिकं

प्रथमगुणैरलंकृतं, दायकोऽपि पुलकं दधचंनी, देयवस्तु परिशुद्धं, पुष्कलतपसामिदं फलमिति । सर्वानुष्ठानेषु विधेरभिमतार्थमिति मन्तव्यम् । साधूनामुचितस्यैव यतिजनयोग्यस्य वस्त्राहारादेः, न सुवर्णादेः, तस्यापि प्रासुकैषणीयस्येत्यर्थः । पादकत्वेऽपि यत् साधुदानेऽभिधानं विशेषतस्तद् यथाकथंचित्तेभ्यो दत्तं महाफलमेवेत्यधुनातनसातशीलदेशनानिराकरणार्थम् । अथवा साधूनां शोभनानाम्, इत्यौषधादीनामेव विशेषणम् । इति गाथार्थः ॥ ९ ॥

अथ साधर्मिकानुकम्पादाने प्राह—

साहम्मियाण दाणं, अहीणधम्माण तह विसेसेणं । दीणाईणणुकंपा,–दाणं धम्मस्सुवाउत्ति ॥१०॥

व्याख्या—' साधर्मिकेभ्यः ' समानदेव-गुरुप्रतिपत्तिमद्भ्यः श्रावकेभ्यो ' दानं ' बन्धुबुद्ध्या वस्त्रा-ऽऽहारादिवितरणम् । तथा चोक्तम्—" दीनानाथसधर्मचारिणि जने संमानदानादिभिः, यः सज्जातिकुलेप्सितेऽपि विधिना सद्बन्धुबुद्ध्या भृशम् । वात्सल्यं विदधाति कारयति वा धर्मप्रशंसास्पदं, स श्राद्धः कथितो विवेकमहतामेकः सतामग्रणीः ॥१॥ " ' अहीनधर्मेभ्यश्च ' संपूर्ण-विशुद्धाणुव्रताद्यनुष्ठानेभ्यः । तथेति समुच्चयार्थो योजित एव । ' विशेषेण ' अतिशयेन विशिष्टतरमित्यर्थः । एतस्यैव च सम्यक्त्वाचारेषु वात्सल्यरूपतया महाफलता गीयते । तदुक्तम्—" साहम्मियथिरकरणं, वच्छल्लं सासणस्स सारोत्ति । मग्गसहायत्तणओ, तहा अणासो य धम्माओ ॥ १ ॥ " तथा ' दीनादीनां ' निःस्व-निर्नाथ-रोगार्तप्रभृतीनाम् ' अनुकम्पादानं ' करुणामात्रेण तदुचितवस्तुवितरणम् । उपलक्षणं चैतत्, तेन गृहागतस्य

व्याख्या—न केवलं उद्धारादिना न ददाति, 'भाण्डमपि' कुङ्कुमादिक्रयाणकमपि 'निजकमूल्यात्' प्रायकस्वक्रीयमूल्याद् 'अतिमहार्घे' द्विगुण-त्रिगुणादिभावेन अत्यन्तबहुमूल्यं 'न' नैव 'संग्रहे' प्रभूततरं गृहीत्वा भाण्डशालादिस्थापनिकायां 'करोति' विधत्ते मतिमानिति योगः, तादृशस्य प्रायः क्षतिहेतुत्वात्। तथा 'अश्व-करि-गवादीन्' तुरग-हस्ति-वृषभ-करभादींश्चतुष्पदभेदान् नैव 'निजार्थे' स्वार्थे तल्लाभेच्छुः 'धारयति' संगृह्णाति 'मतिमान्' सद्बुद्धिः श्राद्ध इति प्रक्रमः। प्रभूतकालमश्वादिधारणं हि खादन-मरणादिभिरवश्यं क्षतिहेतुः, गृहीतमात्रविक्रयोऽपि केशवाणिज्यकर्मादानरूपतया निषिद्धः, इति तद्वाणिज्यं न कार्यम्। इति गाथार्थः ॥ १३ ॥

तथा—

**कप्पाससुत्तवत्थाइ,–संगहं कुणइ धन्नमाईणं। अइपडियविच्चयाण वि, न ते उ संगहणमिच्छन्ति ॥१४॥**

व्याख्या— देशविशेषरूढ्या 'कप्पासो' रूतमुच्यते, तेन 'कर्पाससूत्रवस्त्रादीनां' रूत-तन्तु-वसन-प्रवाल-मौक्तिकमञ्जिष्ठा-पूगादीनां 'संग्रहं' भाण्डशालादौ बहुकालमपि धारणां 'करोति' विधत्ते, एषामजुगुप्सितत्वेन तथाविधजीवसंसक्तिविकलत्वेन च लोकलोकोत्तराऽनिषिद्धत्वेन कथंचिदल्पलाभत्वेऽपि संग्रहस्य समीचीनत्वात्। रूतादिविपरीतस्य तु अत्यन्तं निषेधमाह—'धान्यं' तिल-गोधूमादिकम्, आदिशब्दाद् लाक्षा-गुड-स्नेह-कुसुम्भ-नीली-सत्कूडादिग्रहः। तेषां पुनः अतिपतितवेच्चकानामपि प्रायिकतन्मूल्यापेक्षयाऽत्यन्तसमर्घाणामपि, आस्तां महार्घाणामित्यपिश-

धर्मोपायत्वेन सम्यगवगम्य तथैव व्यापारयत उपायाविसंवादः । इति गाथार्थः ॥ ११ ॥

अथ धर्मानुषङ्गिकफलत्वादर्थस्य तदुपायं नैश्चयिकमाह—

**अत्थोवाओ पुन्नं, तं पुण सच्चेण ववहरंतस्स । अहवा अइलोभेणं, उद्धारगमाइ नो देइ ॥ १२ ॥**

व्याख्या—' अर्थोपायो ' द्रव्योपार्जननिदानं ' पुण्यं ' सुकृतं, तत्पुनः सुकृतं ' सत्येन ' वचन-क्रियाद्यविसंवादलक्षणेन ' व्यवहरतः ' क्रय-विक्रयादि कुर्वतः श्राद्धस्य भवति, लोक-लोकोत्तराऽनिन्दितव्यवहारस्य चौर्यादिपरिहारस्येव सुकृतसाधनत्वाविसंवादात्; अनेन पुण्य-व्यवसाययोः संहतयोः फलसाधकत्वमिति लक्षयति । अथ व्यावहारिकमपि तदुपायगणमभिधित्सुर्व्यवहारस्यैव विधेयाविधेयविभागमाह—' अथवा ' इति प्रकारान्तरद्योतकमव्ययम्, ततो ' अतिलोभेन ' सातिशयधनगार्ध्येन, ' उद्धारकादि नेति ' उद्धारकं सुवर्णादिग्रहणकमन्तरेण प्रतिभूमात्रग्रहणावष्टम्भपूर्वकं स्वद्रविणवितरणम् । मकारोऽलाक्षणिक इति । आदिशब्दात् साक्षिमात्रग्रहणपूर्वकदानग्रहः, तेन, अत्र तृतीयालोपः प्राकृतत्वात्; ' न ददाति ' न वितरति स्वद्रव्यं श्रावकः, तथा दाने हि कदाचिद् बहुलाभसंभवेऽपि भूयसो लोकस्य कुशीलत्वेन प्रायो नीव्या अपि क्षतिसंभवादस्याऽविधेयत्वम् । एवमन्यत्रापि यथासंभवं द्रष्टव्यम् । इति गाथार्थः ॥ १२ ॥

तथा—

**भंडंपि अइमहग्घं, न संगहे कुणइ निययमुल्लाउ । आसकरिगोणमाई, न नियट्ठा धारए मइमं ॥१३॥**

व्याख्या—न केवलं उद्धारादिना न ददाति, 'भाण्डमपि' कुङ्कुमादिक्रयाणकमपि 'निजकमूल्यात्' प्रायकस्वकीयमूल्याद् 'अतिमहार्घं' द्विगुण-त्रिगुणादिभावेन अत्यन्तबहुमूल्यं 'न' नैव 'संग्रहे' प्रभूततरं गृहीत्वा भाण्डशालादिस्थापनिकायां 'करोति' विधत्ते मतिमानिति योगः, तादृशस्य प्रायः क्षतिहेतुत्वात्। तथा 'अश्व-करि-गवादीन्' तुरग-हस्ति-वृषभ-करभादींश्चतुष्पदभेदान् नैव 'निजार्थं' स्वार्थं तल्लाभेच्छुः 'धारयति' संगृह्णाति 'मतिमान्' सबुद्धिः श्राद्ध इति प्रक्रमः। प्रभूतकालमश्वादिधारणं हि खादन-मरणादिभिरवश्यं क्षतिहेतुः, गृहीतमात्रविक्रयोऽपि केशवाणिज्यकर्मादानरूपतया निषिद्धः, इति तद्वाणिज्यं न कार्यम्। इति गाथार्थः ॥ १३ ॥

तथा—

**कप्पासमुत्तवत्थाइ,-संगहं कुणइ धन्नमाईणं। अइपडियविच्चयाण वि, न ते उ संगहणमिच्छन्ति ॥१४॥**

व्याख्या— देशविशेषरूढ्या 'कप्पासो' रूतमुच्यते, तेन 'कर्पाससूत्रवस्त्रादीनां' रूत-तन्तु-वसन-प्रवाल-मौक्तिकमञ्जिष्ठा-पूगादीनां 'संग्रहं' भाण्डशालादौ बहुकालमपि धारणं 'करोति' विधत्ते; एषामजुगुप्सितत्वेन तथाविधजीवसंसक्तिविकलत्वेन च लोकलोकोत्तराऽनिषिद्धत्वेन कथंचिदल्पलाभत्वेऽपि संग्रहस्य समीचीनत्वात्। रूतादिविपरीतस्य तु अत्यन्तं निषेधमाह—'धान्यं' तिल-गोधूमादिकम्, आदिशब्दाद् लाक्षा-गुड-स्नेह-कुसुम्भ-नीली-सक्तूडादिग्रहः। तेषां पुनः अतिपतितवेचकानामपि प्राधिकतन्मूल्यापेक्षयाऽत्यन्तसमर्घाणामपि, आस्तां महार्घाणामित्यपिश-

न्दार्थः, 'न' नैव ते श्राद्धाः, 'तुः' पुनरर्थो योजित एव, 'संग्रहणं' भाण्डशालादिषु बहुकालस्थापनम् 'इच्छन्ति' अभिलषन्ति कर्तुमिति शेषः। न चात्र 'धन्नाइयां तु संगहणं' इति भाष्येण विरोधः शङ्कनीयः, तत्र हि खादन-मरणाद्यनेकाऽपायाकुलत्वेन द्रव्यार्जनानुपायत्वमश्वादिसंग्रहस्य प्रत्यपादि; धान्यादिसंग्रहस्य तु प्रायस्तथाविधाऽपायाभावाद् द्रव्यार्जनोपायत्वमार्थं, न तु तत्संग्रहस्य विधेयत्वम्। एतदेव च 'इच्चाह अत्थुवाउ' इत्याद्यभिदधता तत्रैव स्पष्टीकृतम्, तथाविधाऽश्वादिव्यवहाराणां हि प्रचुरतरत्रसादिजीवात्यन्तसंसक्तिमत्तया भगवत्यादिषु लाक्षावाणिज्यत्वेन प्रतिपादनात्। विधेयाविधेयत्वचिन्ता तु द्रव्योपायाणां सूत्रे, तत्र च व्यक्तो निषेधस्तत्संग्रहस्य। न च व्याख्येयसूत्रनिषिद्धं भगवत्यादिनिषिद्धं च भगवतीसूचिकार एव भगवान् भाष्यकारस्तमनुज्ञास्यतीति संभवति, तस्माद् यथाव्याख्यानमेव सूत्रार्थः समीचीन इति व्यवस्थितम्। इति गाथार्थः ॥ १४ ॥

तथा—

अंगोवरि उद्धारं, निच्छइ अइलाभयं मुणेऊणं। थेवेण वि लाभेणं, बंधेणं अहव रुक्केणं ॥ १५ ॥

व्याख्या—'अङ्गं' ग्राहकस्य शरीरं, तदुपरीति-तदेव लग्नकं विधाय विश्वासातिशयाद् यद्दीयते तद् अङ्गोपरीत्युच्यते। तादृशमुद्धारकमुक्तस्वरूपम् 'अतिलाभदं' प्रचुरतरद्रव्यायनिदानं 'ज्ञात्वा' मनसा विभाव्यापि 'नेच्छति' नाभिलषति दातुमिति शेषः। कथं तर्हि ददाति ? इत्याह—'स्तोकेनापि' अल्पीयसाऽपि लाभेन द्रव्यप्राप्त्या संभावितेन

बन्धेन सुवर्णादिग्रहणकग्रहणेन । ' अथवा ' इति पक्षान्तरसंसूचनार्थः, ' रुकेणं ति ' साक्षात्सुवर्णादिग्रहणेनैव, नान्यथा प्रकारान्तरेण, द्युद्धारकादिना दीयमानस्याऽवश्यं मूलक्षतिहेतुत्वेन अस्यैव प्रकारद्वयस्य साधीयस्त्वादिति भावः । इत्यर्थोपाय इति । एवं कामोपायोऽपि स्त्रीषु साम-दान-माधुर्यादिप्रवृत्तिः । धर्मोपाय एव तु निःशेषोऽपि पारम्पर्येण मोक्षोपाय एव ज्ञेय इति । न चाऽनयोरर्थ-कामोपाययोर्वक्ष्यमाणार्थ-कामकौशलाभ्यामभेदः, अर्थकौशलं हि भाण्डस्यैव प्राधान्याप्राधान्यपरिज्ञाननैपुण्यं तत्पूर्वकश्च संग्रह इति । तथाविधस्यैव भाण्डादेर्ग्रहणाऽग्रहणविधिः सत्यत्वेनैव च व्यवहर्तव्यमिति तु अर्थोपाय इति । तथा कामकौशलं स्त्रीमात्रस्येङ्गिताकारादिना शुभाशुभभावनिश्चयादिकं, तन्निश्चये तत्संदेहे वा स्वरचावमक्रियास्वस्खलितप्रवृत्तिरप्युपचारात्तत्कौशलम् । स्वदारा हि विराधिताः कदाचिद् वधाद्यनर्थकरणेऽपि प्रवर्तेरन्निति स्वदाराणामेव सर्वप्रयत्नेन चित्ताराधनप्रवृत्तिरेव तु कामोपाय इति । एवं सकलपुरुषार्थोपायानवगम्य तथैव प्रवर्तमानस्योपायाविसंवादः । इति गाथार्थः ।. १५ ॥

अथ भावाविसंवादमाह—

पिइ-माइ-भइणि-भाउ य, भावं संवयइ जेण तं कुज्जा । अहवा वि परुविंतो, जहट्ठियं पन्नविज्जा उ ॥

व्याख्या—' पितृ-मातृ-भगिनी-भ्रातॄणां ' प्रतीतानां, ' भावः ' प्रियाप्रियादिषु शुभाशुभादिषु परिणामः, स संवदति, तद्विरुद्धभावान्तरानुत्पादेन संघटते येन केनापि कृतेन सता प्रियादिविषयदानादानादिना तद्दानादिकं ' कुर्याद् '

न्दार्थः, 'न' नैव ते श्राद्धाः, 'तु' पुनरर्थो योजित एव, 'संग्रहणं' भाण्डशालादिषु बहुकालस्थापनम् 'इच्छन्ति' अभिलपन्ति कर्तुमिति शेषः । न चात्र 'मत्वाहणं तु संगहणं' इति भाष्येण विरोधः शङ्कनीयः, तत्र हि खादन-मरणाधनेकाऽपायाकुलत्वेन द्रव्यार्जनानुपायत्वमश्वादिसंग्रहस्य प्रत्यपादि; धान्यादिसंग्रहस्य तु प्रायस्तथाविधाऽपायाभावाद् द्रव्यार्जनोपायत्वमात्रं, न तु तत्संग्रहस्य विधेयत्वम् । एतदेव च 'इचाइ अत्थुवाउ' इत्याद्यभिदधता तत्रैव स्पष्टीकृतम्, तथाविधाऽश्वादिव्यवहाराणां हि प्रचुरतरत्रसादिजीवात्यन्तसंसक्तिमत्तया भगवत्यादिषु लाक्षावाणिज्यत्वेन प्रतिपादनात् । विधेयाविधेयत्वचिन्ता तु द्रव्योपायानां सूत्रे, तत्र च व्यक्तो निषेधस्तत्संग्रहस्य । न च व्याख्येयसूत्रनिषिद्धं भगवत्यादिनिषिद्धं च भगवतीवृत्तिकार एव भगवान् भाष्यकारस्तमनुज्ञास्यतीति संभवति, तस्माद् यथाव्याख्यानमेव सूत्रार्थः समीचीन इति व्यवस्थितम् । इति गाथार्थः ॥ १४ ॥

तथा—

अंगोवरि उद्धारं, निच्छइ अइलाभयं मुणेऊणं । थेवेण वि लाभेणं, बंधेणं अहव रुक्केणं ॥ १५ ॥

व्याख्या—'अङ्गं' ग्राहकस्य शरीरं, तदुपरीति-तदेव लग्नकं विधाय विश्वासातिशयाद् यद्दीयते तद् अङ्गोपरीत्युच्यते । तादृशमुद्धारकमुक्तस्वरूपम् 'अतिलाभदं' प्रचुरतरद्रव्यायनिदानं 'ज्ञात्वा' मनसा विभाव्यापि 'नेच्छति' नाभिलपति दातुमिति शेषः । कथं तर्हि ददाति ? इत्याह—'स्तोकेनापि' अल्पीयसाऽपि लाभेन द्रव्यप्राप्त्या संभावितेन

'न कुर्याद्' विदध्यान्नैव । अमुमेवार्थं स्पष्टप्रतिपत्तये व्यतिरेकेणाह—'किं पुनरिति' किन्तु येन पूर्वोदितकलहादिपरिहारलक्षणेन कृत्येन 'स्थिरः' प्रतिपत्तिकालाद् दृढतरो 'भवति' जायते भावस्तत् 'करोति' विधत्ते श्राद्धः । पुनः करणक्रियाभिधानं भिन्नवाक्यत्वाददुष्टमिति । न चाऽस्यापि वक्ष्यमाणधर्मानुगतभावकौशलादभेदः, तद्धि इङ्गितादिना भावज्ञानं मुख्यतः, उपचारतस्तु तत्पूर्वकं स्थिरीकरणादिकम् । अयं तु भावस्थिरीकरणहेतुक्रियाविशेषरूपः । तदत्र क्रियायाः प्राधान्यं, तत्र तु ज्ञानस्य प्राधान्यमिति भेदः । इति गाथार्थः ॥ १७ ॥

समस्तपुरुषार्थदा जिनवरेन्द्रवाणी च या, कषयविरतिर्यथा कलुषसन्ततिच्छेदिनी ।
ऋजुव्यवहृतिः सदा भवति कस्य हंसीव सा, न मानसविहारिणी स्फुरदगण्यपुण्यश्रियः ॥ १ ॥

इति युगप्रवरागमश्रीमज्जिनपतिसूरिशिष्यलेशविरचितायां षट्स्थानकवृत्तौ ऋजुमतिव्यवहरणं नाम चतुर्थस्थानकं विवरणतः समाप्तम् ॥

## अथ गुरुशुश्रूषानामकं पञ्चमं स्थानकम् ।

उक्तं सप्रभेदमृजुमतिव्यवहरणम् । अथैतस्यैव प्रधानकारणभूतां गुरुशुश्रूषां सप्रभेदामाह—

विदध्यात्, भावमिति द्वितीया प्रथमार्थे प्राकृतत्वात् । साधर्मिकाणां हि पित्रादीनां सर्वत्र प्रिये पुत्रादौ साधर्मिकादौ च सर्वप्रयत्नेन दानादिकं, तत्प्रत्यनीकेषु च मानभ्रंशादिकम्, असाधर्मिकाणां तु स्वकीयधर्मानुगतभावाऽबाधया प्रधानव- स्त्रादिदानेन तच्चित्तावर्जनमात्रार्थं, तत्प्रियपुत्रादौ तथैव दानादिकं विदधानस्तद्भावाऽविसंवादको भवेदिति भावः । न चाऽस्य वक्ष्यमाणेहलोकगुरुशुश्रूषया अभेदः, सा हि पित्रादीनामेव क्वचिद्दानादौ प्रवर्तमानानां देयसंपादनाद्युपचारेण मनः- समाधानापादनरूपा, अयं तु तत्प्रियपुत्राद्युपचारेणेति भेदः । लौकिकभावाऽविसंवादं प्रतिपाद्य लोकोत्तरमप्याह—' अथ- वाऽपीति ' अथवेति भावाविसंवादप्रकारान्तरसंसूचनार्थः, अपिर्भिन्नक्रमः, ततः ' प्ररूपयन् ' किञ्चिज्जीवादितत्त्वं कस्यापि पुर उपदिशन् आदौ ' यथास्थितं ' येन प्रकारेण प्रमाणेन प्रतिष्ठितं तथैव ' प्रज्ञापयेत् ' प्रतिपादयेत्, अन्यथा तु स्वकी- यस्य प्रेक्षावतः श्रोतुर्वा भावस्य विसंवादः स्यात् । इति गाथार्थः ॥ १६ ॥

तमेव प्रकारान्तरेणाह—

अहिणवधम्माणं वा, जेण विसंवयइ धम्मपरिणामो । न तहा कुज्जा किं पुण, जेण थिरो होइ तं कुणइ ॥

व्याख्या—' अभिनवधर्माणां ' तत्कालप्रतिपन्नविशुद्धार्हन्मार्गाणां सत्त्वानां चेति पूर्ववत् । येन केनापि कलहा- सम्भाषण-परबकक्रियाद्यशुद्धव्यवहार—चैत्यवन्दनपूजाप्रतिक्रमणाद्यविधिप्रवृत्तिदर्शनादिना ' विसंवदति ' विघटते धर्मपरिणामो विशुद्धमार्गप्रतिपत्त्यध्यवसायः, भवतोर्नित्याभिसंबन्धात्, तत्कृत्यं तेनाभिनवधर्मभावोपघातकत्वप्रकारेण

'न कुर्याद्' विदध्यान्नैव। अमुमेवार्थं स्पष्टप्रतिपत्तये व्यतिरेकेणाह—'किं पुनरिति' किन्तु येन पूर्वोदितकलहादिपरिहारलक्षणेन कृत्येन 'स्थिरः' प्रतिपत्तिकालाद् दृढतरो 'भवति' जायते भावस्तत् 'करोति' विधत्ते श्राद्धः। पुनः करणक्रियाभिधानं भिन्नवाक्यत्वाददुष्टमिति। न चाऽस्यापि वक्ष्यमाणधर्मानुगतभावकौशलादभेदः, तद्धि इङ्गितादिना भावज्ञानं मुख्यतः, उपचारतस्तु तत्पूर्वकं स्थिरीकरणादिकम्। अयं तु भावस्थिरीकरणहेतुक्रियाविशेषरूपः। तदत्र क्रियायाः प्राधान्यं, तत्र तु ज्ञानस्य प्राधान्यमिति भेदः। इति गाथार्थः ॥ १७ ॥

समस्तपुरुषार्थदा जिनवरेन्द्रवाणी च या, कषायविरतिर्यथा कलुषसन्ततिच्छेदिनी।
ऋजुव्यवहृतिः सदा भवति कस्य हंसीव सा, न मानसविहारिणी स्फुरदगण्यपुण्यश्रियः ॥ १ ॥

इति युगप्रवरागमश्रीमज्जिनपतिसूरिशिष्यलेशविरचितायां षट्स्थानकवृत्तौ ऋजुमतिव्यवहरणं नाम चतुर्थस्थानकं विवरणतः समाप्तम् ॥

## अथ गुरुशुश्रूषानामकं पञ्चमं स्थानकम्।

उक्तं सप्रभेदमृजुमतिव्यवहरणम्। अथैतस्यैव प्रधानकारणभूतां गुरुशुश्रूषां सप्रभेदामाह—

विदध्यात्, भावमिति द्वितीया प्रथमार्थे प्राकृतत्वात् । साधर्मिकाणां हि पित्रादीनां सर्वत्र प्रिये पुत्रादौ साधर्मिकादौ च सर्वप्रयत्नेन दानादिकं, तत्प्रत्यनीकेषु च मानभ्रंशादिकम्, असाधर्मिकाणां तु स्वकीयधर्मानुगतभावाऽबाधया प्रधानवस्त्रादिदानेन तच्चित्तावर्जनमात्रार्थं, तत्प्रियपुत्रादौ तथैव दानादिकं विदधानस्तद्भावाऽविसंवादको भवेदिति भावः । न चाऽस्य वक्ष्यमाणेहलोकगुरुशुश्रूषया अभेदः, सा हि पित्रादीनामेव क्वचिद्दानादौ प्रवर्तमानानां देयसंपादनाद्युपचारेण मनःसमाधानापादनरूपा, अयं तु तत्प्रियपुत्राद्युपचारेणेति भेदः । लौकिकभावाऽविसंवादं प्रतिपाद्य लोकोत्तरमप्याह—' अथवाऽपीति ' अथवेति भावाविसंवादप्रकारान्तरसंसूचनार्थः, अपिर्भिन्नक्रमः, ततः ' प्ररूपयन् ' किञ्चिज्जीवादितत्त्वं कस्यापि गुरु उपदिशन् श्राद्धो ' यथास्थितं ' येन प्रकारेण प्रमाणेन प्रतिष्ठितं तथैव ' प्रज्ञापयेत् ' प्रतिपादयेत्, अन्यथा तु स्वकीयस्य प्रेक्षावतः श्रोतुर्वा भावस्य विसंवादः स्यात् । इति गाथार्थः ॥ १६ ॥

तमेव प्रकारान्तरेणाह—

**अहिणवधम्माणं वा, जेण विसंवयइ धम्मपरिणामो । न तहा कुज्जा किं पुण, जेण थिरो होइ तं कुणइ ॥**

व्याख्या—' अभिनवधर्माणां ' तत्कालप्रतिपन्नविशुद्धार्हन्मार्गाणां सत्त्वानां चेति पूर्ववत् । येन केनापि कलहाऽसभ्यभाषण-परवञ्चक्रियाद्यशुद्धव्यवहार-चैत्यवन्दनपूजाप्रतिक्रमणाद्यविधिप्रवृत्तिदर्शनादिना ' विसंवदति ' विघटते धर्मपरिणामो विशुद्धमार्गप्रतिपत्त्यध्यवसायः, यत्तदोर्नित्याभिसंबन्धात्, तत्कृत्यं तेनाभिनवधर्मभावोपघातकत्वप्रकारेण

तृतीयभेदमाह—' भावे तु ' भावविषया पुनरेवं शुश्रूषा ' तयोः ' पित्रोः, ' अनुकूलं ' मनःप्रसादसंपादकं देवद्रव्य-संपत्ति-च्छन्दानुवर्तनादिकमनुसरति-करोतीति, ' दानादिषु ' ताभ्यामेव विधीयमानबान्धवादिविषयाभीप्सिताहारादि-वितरणादिषु, एतदपि विशेषतः साधर्मिकादिविषयदानादौ बोद्धव्यम् । इति गाथार्थः ॥ २ ॥

अथ लोकोत्तरगुरूंस्तच्छुश्रूषाभेदांश्चाह—

**अहवा वि गुरू सम्मत्त—दायगा ताण होइ सुस्सूसा । इंताणभिमुहगमणं, उट्ठाणं उट्ठिएसु च ॥ ३ ॥**

व्याख्या—अथवेति पक्षान्तरे, ' गुरवो ' गौरवार्हाः सम्यक्त्वदायका भवकोटाकोटीदुरापतत्त्वार्थविषयतयेति प्रत्य-योत्पादकाः, तेषां ' भवति ' जायते ' शुश्रूषा ' उपास्तिः कर्तव्येति शेषः । तत्रापि सेवां तावदाह—' आगच्छताम् उद्यत-विहारेण देशान्तरादेरागमनं विदधतां गुरूणां क्वचिद् ' अभिमुखगमनं ' संमुखीनं यानम् ' उत्थानं ' ससंभ्रममासनत्य-जनम् ' उत्थितेषु ' ऊर्ध्वस्थितेषु पुनः । इति गाथार्थः ॥ ३ ॥

तथा—

**विस्सामणाइ सम्मं,—ठियाणऽणुव्वयणमेव जंताणं । संपाडणमेयाणं, समिच्छियाणं विसुद्धाणं ॥४॥**

व्याख्या—' विश्रामणं ' स्वाध्यायादिश्रान्तानां त्रिविधसंबाधनतया शारीरश्रमापनोदनम्, आदिशब्दात्तथाविधाऽन्य-वैयावृत्त्यभेदग्रहणं, तत् ' सम्यक् ' भावसारं त्वगादिसुखहेतुत्वेन वा ' स्थितानां ' सुखासनासीनानाम् ' अनुव्रजनमेव '

गुरुसुस्सूसा तिविहा, सेवासंपाडणेण भावे य । इहलोय गुरू पियरो, सुस्सूसणं कुणइ ताणं ॥१॥

व्याख्या—' गुरूणां ' पूर्वोक्तस्वरूपाणां ' शुश्रूषा ' सामान्येन पर्युपासना ' त्रिविधा ' त्रिप्रकारा । सेवासंपादने-नेति "शिरोनमनाञ्जलिप्रग्रहसमासन्नसदावस्थिति-ससंभ्रमादेशादिविधानं सेवा, वाञ्छिताहारादिसकलवस्तुभिस्तद्-इष्टपरिजनादिकार्यसंपादनमेव च संपादनम्; ताभ्यां ते एव वा शुश्रूषा, एकवचनं प्राकृतत्वात् समाहाराद्वा । भाव आत्म-परिणामविशेषः, तद्धेतुर्विशिष्टदान-संमानादिरपि भावः, तत्र च तद्विषये च शुश्रूषेति प्रकृतम् । भावस्य च भिन्नविभक्तित्वेन भेदेन चोपन्यासः पूर्वद्वयमपाद्यत्वात् प्राधान्यख्यापनार्थः । गुरुशुश्रूषेत्युक्तम्, तत्र च ' इहलोके ' एतद्भवे एवाऽचिन्त्य-महिमचिन्तामणिकल्पसद्धर्मप्रभृतिसकलपुरुषार्थसंपत्तिनिमित्तजन्मसंपादकत्वाद् ' गुरू ' गौरवार्हौ ' पितरौ ' माता-पितरौ, ततस्तयोः ' शुश्रूषणं ' पूर्वोपदर्शितशिरोनमनादिसेवालक्षणमादरतः ' करोति ' विधत्ते । अनेन च सामान्यवचनेन प्रायः शुश्रूषाभेदः प्रतिपादितः । इति गाथार्थः ॥ १ ॥

अथ द्वितीय-तृतीयावाह—

आहार-वत्थ-सयणा-इएसु उज्जमइ इच्छियतरेसु । भावे उ ताणमणुकूल-मायरे दाणमाईसु ॥२॥

व्याख्या—' आहार-वस्त्र-शयनादिकेषु ' भोजना-ऽऽच्छादन-शय्यो-पवेशना-ऽलंकारादिषु, ' ईप्सिततरेषु ' मनोहारितयाऽत्यन्तप्रियेषु ' उद्यच्छति ' सर्वादरेणोद्यमं करोति, तयोः संपादयत्येतान् इत्यर्थः । अनेन द्वितीयभेद उक्तः । अथ

तृतीयभेदमाह--' भावे तु ' भावविषया पुनरेवं शुश्रूषा ' तयोः ' पित्रोः, ' अनुकूलं मनःप्रसादसंपादकं देवद्रव्य-संपत्ति--च्छन्दानुवर्तनादिकमनुसरति--करोतीति, ' दानादिषु ' ताभ्यामेव विधीयमानबान्धवादिविषयाभीप्सिताहारादि-वितरणादिषु, एतदपि विशेषतः साधर्मिकादिविषयदानादौ बोद्धव्यम् । इति गाथार्थः ॥ २ ॥

अथ लोकोत्तरगुरुंस्तच्छुश्रूषाभेदांश्चाह—

**अहवा वि गुरू सम्मत्त--दायगा ताण होइ सुस्सूसा । इंताणभिमुहगमणं, उट्ठाणं उट्ठिएसु च ॥ ३ ॥**

व्याख्या—अथवेति पक्षान्तरे, ' गुरवो ' गौरवार्हाः सम्यक्त्वदायका भवकोटाकोटीदुरापतत्त्वार्थविषयतयेति प्रत्ययोत्पादकाः, तेषां ' भवति ' जायते ' शुश्रूषा ' उपास्तिः कर्तव्येति शेषः । तत्रापि सेवां तावदाह--' आगच्छताम् उद्यवविहारेण देशान्तरादेरागमनं विदधतां गुरूणां क्वचिद् ' अभिमुखगमनं ' संमुखीनं यानम् ' उत्थानं ' ससंभ्रममासनत्यजनम् ' उत्थितेषु ' ऊर्ध्वस्थितेषु पुनः । इति गाथार्थः ॥ ३ ॥

तथा—

**विस्सामणाइ सम्मं,--ठियाणऽणुव्वयणमेव जंताणं । संपाडणमेयाणं, समिच्छियाणं विसुद्धाणं ॥४॥**

व्याख्या—' विश्रामणं ' स्वाध्यायादिश्रान्तानां त्रिविधसंबाधनतया शारीरश्रमापनोदनम्, आदिशब्दात्तथाविधाऽन्यवैयावृत्त्यभेदग्रहणं, तद् ' सम्यक् ' भावसारं त्वगादिसुखहेतुत्वेन वा ' स्थितानां ' सुखासनासीनानाम् ' अनुव्रजनमेव '

पयापूगमनमेव, न तु विश्रामणादिकं यातां–गच्छतां क्वचिद्विहारक्रमाद्यर्थमिति पूर्वोदितपित्राद्यपेक्षया विशिष्टतरशिरोनमनादिप्रसादधान एव एतद् गुरुषु सातिशयं निदधातीति भावः । न चाऽस्य गुर्वभिमुखगमनादेर्जीवोपमर्दननिमित्तत्वेन असमीचीनतेति वाच्यम्, सामान्यसाधूनामपि क्रियते " अभिमुहगमणमासणं० " इत्यादिना सिद्धान्ते तस्याऽभिधानात् । नृपादीनामपि समस्तस्वसैन्यादिसनाथानामेव गुरुषु प्रतिपत्त्यतिशयख्यापनार्थं वन्दनादिनिमित्तं गमनश्रवणाच्च । विश्रामणादिकमपि श्राद्धस्य यदुक्तं तद् गुर्वादिविषयभक्त्यतिशयख्यापनार्थम् । गुर्वादयस्तु कदाचित्पुष्टालम्बनेनैव तत् कारयन्तीति । अथ संपादनमाह–' संपादनं ' स्थानान्तरादाहृत्य संघटनम्, ' एतेषां ' गुरूणां सपरिकराणाम् । कस्य संपादनम् ? इत्याह–' समीप्सितानाम् ' अभिवाञ्छितानामाहारादीनां, ' विशुद्धानां ' प्रासुकैषणीयानाम् । इति गाथार्थः ॥ ४ ॥

अथ भावशुश्रूषामाह—

**भावाणुवत्तणं तह, सव्वपयत्तेण ताण कायव्वं । सम्मत्तदायगाणं, दुप्पडियारं जओ भणियं ॥५॥**

व्याख्या—' भावानुवर्तनं ' तेषां क्वचिद्दानव्याख्यानादौ प्रवर्तमानानामानुकूल्येन तदभिप्रायानुवृत्तिश्छन्दोऽनुवर्तनादिकं ' तथेति ' समुच्चयार्थो गाथादौ द्रष्टव्यः, ' सर्वप्रयत्नेन ' शारीर–वाचिक–मानस–दान–सम्मानादिसमस्तादरेण ' तेषां ' सद्गुरूणां ' कर्तव्यं ' विधेयं भवतीति गम्यते । कस्मादेवम् ? इत्यत आह—' सम्यक्त्वदायकानां ' सदुपदेशदानेनाऽनन्तक्लेशावशेषाऽमन्दपरमानन्दसंपादकसम्यग्भावोत्पादकानां ' दुष्प्रतीकारं ' प्रतिकर्तुं दुःशक्यं ' यतो ' यस्मात्कारणाद्

' भणितम् ' उक्तमागमे गणधरादिभिः । इति गाथार्थः ॥ ५ ॥

यदुक्तं तदेवाह—

**सम्मत्तदायगाणं दु–प्पडियारं भवेसु बहुएसु । सव्वगुणमेलियाहिं वि, उवयारसहस्सकोडीहिं ॥६॥**

व्याख्या—' सम्यक्त्वदायकानां दुष्प्रतीकारम् ' इति पूर्ववत् । कुत्र कैर्दुष्प्रतीकारम् ? इत्यत आह–' भवेषु मनुजदेवादिजन्मसु ' बहुषु ' संख्यातिक्रान्तत्वेन प्रभूतेषु वर्तमानाभिः ' सर्वगुणमेलिताभिः ' द्विगुण–त्रिगुणाभिः, यावदनन्तगुणाभिरपीत्यर्थः, उपकारसहस्रकोटीभिः भवे विधीयमानदान–संमानादिगुणान्तरकोटीसहस्रैरपि तदुपकारसंवादकोपकारान्तरकरणाऽभावादिति भावः । तदुक्तम्–" दुष्प्रतीकारौ माता,–पितरौ–स्वामी गुरुश्च लोकेऽस्मिन्' तत्र गुरुरिहाऽमुत्र च सुदुष्करतरप्रतीकारः । तत्किं सर्वथा तेषां प्रतिकर्तुमशक्यमेव, उत कथञ्चिच्छक्यमपि ? तत्रोच्यते–कथञ्चित्सम्यक्त्वादेः प्रतिपतितानां तत्रैव पुनः स्थापनेन, नान्यथा । तदुक्तम्–" जो जेण जम्मि ठाणम्मि ठाविओ दंसणे व चरणे वा । सो तं तओ चुयंतं–मि चेव ठविउं भवे निरिणो ॥ १ ॥ " तदेवं परमोपकारिषु गुरुषु सर्वादरेण शुश्रूषा संगता । इति गाथार्थः ॥ ६ ॥

**हेयोपादेयतत्त्वावगतिसुखविधावुच्छ्वसद्दीपकीला, स्थूलाज्ञानान्धकारास्तरणदिनमणिप्रोद्यदुद्दामदीप्तिः ।**

सर्वानर्वार्थसार्थान् करकमलगतानादधानैव सद्यः, शुश्रूषा सद्गुरूणां किमिह न फलति प्राणभाजां प्रसन्ना ॥ १ ॥

इति युगप्रवरागमश्रीमज्जिनपतिसूरिशिष्यलेशविरचितायां षट्स्थानकवृत्तौ गुरुशुश्रूषास्थानकं पञ्चमं विवरणतः समाप्तम् ॥

---

## अथ प्रवचनकौशलाख्यं षष्ठं स्थानकम् ।

उक्ता गुरुशुश्रूषा; तस्या एव प्रधानं कार्यं प्रवचनकौशलमाह—

**पवयणकोसल्लं पुण, छब्भेयं तं समासओ भणियं । सुत्ते जिणिंदभणिए, कोसल्लं ताव पढमं तु ॥१॥**

व्याख्या—' प्रवचनकौशलं ' जिनशासनरहस्यनैपुण्यं; तदनुसारिश्रद्धान-प्ररूपणबहुमान-तदर्थानुष्ठानादिव्यवहारोऽपि उपचारात्कौशलम् । ' पुनः ' इत्यनेन गुरुशुश्रूषाया एतद्भिनत्ति । ' षड्भेदं ' षट्प्रकारं सूत्रादिविषयभेदात् । तदुक्तम्—" जिणसासणनिउणत्तं, एयं वुच्चइ तहा छभेयं च । सुत्तत्थे उस्सग्गा,-ऽववायववहारभावे य " ॥ १ ॥ ' तद् ' इत्यागमप्रसिद्धं, ' समासतः ' संक्षेपेण, मूलभेदापेक्षया षड्विधम् अवान्तरभेदानां बहुत्वात् । अथवा प्रवचनकौशलम् अभोच्यते इति शेषः; ' पुण छब्भेयं तं ' ति, तत्पुनः समासतः षड्भेदमित्येवं योजनीयम् । ' भणितम् ' उक्तं गणधरादि-

भिरिति गम्यते । तत्रापि सूत्रे एव समस्तजन्तुजातहिताऽर्धमागधभाषोपनिबद्धाऽविरुद्धार्थशब्दसंदर्भरूपे एव जिनेन्द्रभणिते अर्थतस्तीर्थंकरोपदिष्टे; शब्दतस्तु गणधरदृब्धेऽपि परम्परया तीर्थकरापोदिष्टत्वमेव । तदुक्तम्—" अत्थं भासइ अरिहा, सुत्तं गंथन्ति गणहारा निउणं " इति । कौशलं तदुपदिष्टत्वज्ञाननैपुणम् । तावच्छब्दः क्रमार्थः । अर्थकौशलाद्यपेक्षया ' प्रथमं ' पूर्वं, ' तुः ' एवकारार्थो योजित एव, सूत्रस्यादिप्रतिपादकत्वेन प्राधान्यविवक्षया तत्कौशलस्य प्रथममभिधानम् । इति गाथार्थः ॥ १ ॥

तदेवाह—

**जाणइ जिणिंदभणियं, एयं पुव्वावरेण अविरोहा । एयं पुव्वावरबाहियं तु जिणभासियं तं नो॥२॥**

व्याख्या—' जानाति ' सद्गुरुशुश्रूषादेर्निश्चिनोति ' जिनेन्द्रभणितं ' तीर्थकरप्रणीतम् ' एतत् ' प्रत्यक्षोपलभ्यमानमाचाराङ्गादिकम्, कुतः? इत्याह—पूर्वापरेणाऽविरोधात्, सूत्रपूर्वभागोपदिष्टोऽर्थोऽहिंसादिरुपचारात् पूर्व इत्युच्यते, एवमपरेऽप्यर्थ एव । ततश्च पूर्वस्यापरेण हिंसादिप्रतिपादकत्वेनाऽविरोधादनिषेधनात् । नहि पूर्वमहिंसादकं प्रतिपाद्य पश्चाद्धिंसादिकं प्रतिपादयत्येतदिति भावः । एतदेव च जिनेन्द्रभणितमित्यभिदधताऽभिव्यञ्जितं वितथाविरुद्धाभिधानाऽव्यभिचारिकारणरागादिदोषजेतृशिरोमणयो हि जिनेन्द्राः । ते चाप्ताः कथं विरुद्धं भाषिष्यन्त इति । यथा च वीतरागस्याऽविरुद्धभाषित्वमेव तथा प्रथमस्थानकविवरणेऽभिहितमिति । ततश्च पूर्वापराविरुद्धं यत्सूत्रं तदेव जिनेन्द्रभाषितमेवेति निश्चिनोतीति ।

सर्वानर्वार्थसार्थान् करकमलगतानादधानैव सद्यः, शुश्रूषा सद्गुरूणां किमिह न फलति प्राणभाजां प्रसन्ना ॥ १ ॥

इति युगप्रवरागमश्रीमज्जिनपतिसूरिशिष्यलेशविरचितायां षट्स्थानकवृत्तौ गुरुशुश्रूषास्थानकं पञ्चमं विवरणतः समाप्तम् ॥

---

## अथ प्रवचनकौशलाख्यं षष्ठं स्थानकम् ।

उक्ता गुरुशुश्रूषा; तस्या एव प्रधानं कार्यं प्रवचनकौशलमाह—

पवयणकोसल्लं पुण, छब्भेयं तं समासओ भणियं । सुत्ते जिणिंदभणिए, कोसल्लं ताव पढमं तु ॥१॥

व्याख्या—' प्रवचनकौशलं ' जिनशासनरहस्यनैपुण्यं; तदनुसारिश्रद्धान-प्ररूपणबहुमान-तदर्थानुष्ठानादिव्यवहारोऽपि उपचारात्कौशलम् । ' पुनः ' इत्यनेन गुरुशुश्रूषाया एतद्भिनत्ति । ' षड्भेदं ' षट्प्रकारं सूत्रादिविषयभेदात् । तदुक्तम्—"जिणसासणनिउणत्तं, एयं वुच्चइ तहा छभेयं च । सुत्तत्थे उस्सग्गा,-ऽववायववहारभावे य" ॥ १ ॥ ' तद् ' इत्यागमप्रसिद्धं, ' समासतः ' संक्षेपेण, मूलभेदापेक्षया षड्विधम् अवान्तरभेदानां बहुत्वात् । अथवा प्रवचनकौशलम् अभोच्यते इति शेषः; ' पुण छब्भेयं तं ' ति, तत्पुनः समासतः षड्भेदमित्येवं योजनीयम् । ' भणितम् ' उक्तं गणधरादि-

शिवाय कल्पते, न तु वैरस्वामी-सङ्गमस्थविरादिविहितबृहत्कारणिकचैत्यभक्तिनित्यवासित्वाद्यालम्बनपरिग्रहणेत्येवंरूपः। तथा
च तत्रैवोक्तम्-" आलंबणेण केणइ, जे अन्ने संजयं पमायन्ति। न हु तं होइ पमाणं, भूयत्थगवेसणं कुज्जा " ॥ १ ॥
तथेति समुच्चये, निगृह्यते परवचनं निराक्रियतेऽनेनेति निग्रहः प्रत्युत्तरवाक्यम्। ततो यस्मात्कारणादेष चायं चात्र निग्रहो
निराकरणवचनम्-" उह्वावणा परेसिं सा तित्थउब्भावणं च वच्छल्लं। न गणेति गणेमाणा पुव्वुत्तियपुप्फमाहिमं च "
॥ १ ॥ ततो यद्येतत्परवचनं न स्यान्नैतस्य निग्रहः स्याद्, अस्ति चायं निग्रहः, इत्येवंरूपात्तर्कान्निश्चिनोति नूनं " चेइय-
पूया किं " इत्यादिकं परवचनमेवेति। यद्यप्यत्र तदर्थपर्यालोचनेनैव पूर्वपक्षोत्तरपक्षत्वानिर्णयः, तथापि नैतदर्थकौशलं, तद्-
द्वारेणाप्येतत्परवचनमेतदुत्तरवचनमित्येवंरूपतया सूत्रस्यैव प्राधान्येन प्रतीतेः सूत्रकौशलमेवेति। उपलक्षणं चैतत् कल्पादि-
च्छेदश्रुतोक्तानां व्यवहारनिश्चयनयस्वसमयपरसमय-संज्ञादिसूत्राणां तदुच्चारणाविधेश्च। तदुक्तम्-" सन्नाइसुत्ताण व,
इवन्नाणं। जं उच्चारणमणहं, एयं वा सुत्तकोसल्लं " ॥ २ ॥ इति गाथार्थः ॥ ३ ॥
अंगाणंगाइयाण वेगयरं। उस्सग्गाऽववायाण व, एगयरमिमं ति जं मुणइ ॥ १ ॥ पयवक्काण सच्छेयं, उदत्तमणुदत्तमा-

अथ सूत्राभिधेयत्वादर्थस्य तत्कौशलमाह—

एयं उवउत्तेण, ठिएण भणियं वियाणाहि ॥ ४ ॥
अत्थे य कोसल्लं, पुण अणुवउत्ताइभासियमिणं तु।
व्याख्या—सूत्रे तावदुक्तं कौशलम्। ' अर्थे ' तदभिधेये पुनरेतत्कौशलं यद् गुरुविधीयमानव्याख्यानादौ सता-

उपलक्षणं चैतत्, तेन शेषसूत्रलक्षणयोगादपीति द्रष्टव्यम् । तच्चेदम्–" पुव्वावरसंजुत्तं, वेरग्गकरं संततमविरुद्धं । पोराणमद्धमागह–भासानिययं भवइ सुत्तं ॥ १ ॥ इति अन्वयेन प्रतिपादितोऽप्यर्थः पुनर्व्यतिरेकेण प्रतिपाद्यमानः सुदृढसंस्कारकारणं भवतीति व्यतिरेकमाह–' एतत्तु ' एतत्पुनः श्रुति–स्मृति–प्रज्ञापारमितादिकं ' पूर्वापरबाधितं ' " न हिंस्यात् सर्वभूतानि " इत्याद्यभिधानेऽपि पूर्वं, पश्चाद् यागादौ पशुसमालभनाद्यभिधायकत्वात् । ' तुः ' पुनरर्थो योजित एव । यस्मादेवं पूर्वापरबाधितं ' तत् ' ' तस्माद् ' जिनभाषितं नो ' नैव एतादिति । अत्रापि पूर्ववज्जिनशब्दोपादानमाप्तत्वव्यञ्जनार्थमेव, ततः कथमेवंविधं वीतरागो ब्रूयादिति निश्चिनोति । इति गाथार्थः ॥ २ ॥

किञ्च—

परवयणं वा एयं, जमित्थमासंकियं न ठिय पक्खो । जम्हा अयमहिगारो, एस तहा निग्गहो जम्हा ॥३॥

व्याख्या—' परवचनं वा ' पूर्वपक्षवादिवाक्यम् ' एतद् ' इति वा जानाति सूत्रकौशलवानिति प्रक्रमः । कुत एतद् ? इत्याह–' यद् ' यस्माद् एतस्मिन् वाक्ये ' आशङ्कितं ' निषिद्धमपि कर्तव्यतया प्रसञ्जितम् । यथा–" चेइयपूया कि वइर–सामिणा मुणियपुव्वसारेणं । कया पुरीए तइया, मुक्खंगं सा वि साहूणं " ॥ १ ॥ यदा आशङ्कितमेवैतादिति जानाति तदाऽनेनैवायमाशङ्कितरूपः स्थितः पक्षसिद्धान्तप्रतिष्ठितार्थवचनलक्षण इत्यपि जानातीति गम्यते । एतदपि कुतः ? इत्यत आह–' यस्मादयमधिकारः, ' एषोऽर्थविशेषाभिधानप्रक्रमः साधूनामसदालम्बनपरिहारेणैव विशुद्धसंयमः

शिवाय कल्पते, न तु वैरस्वामी–सङ्गमस्थविरादिविहितबृहत्कारणिकचैत्यभक्तिनित्यवासित्वाद्यालम्बनपरिग्रहणेत्येवंरूपः। तथा च तत्रैवोक्तम्–" आलंबणेण केणइ, जे अन्ने संजयं पमायन्ति। न हु तं होइ पमाणं, भूयत्थगवेसणं कुज्जा " ॥ १ ॥ तथेति समुच्चये, निगृह्यते परवचनं निराक्रियतेऽनेनेति निग्रहः प्रत्युत्तरवाक्यम्। ततो यस्मात्कारणादेष चायं चात्र निग्रहो निराकरणवचनम्–" उब्भावणा परेसिं सा तित्थउब्भावणं च वच्छल्लं। न गणेति गणेमाणा पुव्वुत्तियपुप्फमाहिमं च " ॥ १ ॥ ततो यद्येतत्परवचनं न स्यान्नैतस्य निग्रहः स्याद्, अस्ति चायं निग्रहः, इत्येवंरूपात्तर्कान्निश्चिनोति नूनं " चेइय-पूया किं " इत्यादिकं परवचनमेवेति। यद्यप्यत्र तदर्थपर्यालोचनेनैव पूर्वपक्षोत्तरपक्षत्वानिर्णयः, तथापि नैतदर्थकौशलं, तद्-द्वारेणाप्येतत्परवचनमेतदुत्तरवचनमित्येवंरूपतया सूत्रस्यैव प्राधान्येन प्रतीतेः सूत्रकौशलमेवेति। उपलक्षणं चैतत् कल्पादि-च्छेदश्रुतोक्तानां व्यवहारनिश्चयनयस्वसमयपरसमय–संज्ञादिसूत्राणां तदुच्चारणाविधेश्च। तदुक्तम्–" सन्नाइसुत्ताण य, अंगाणंगाइयाण वेगयरं। उस्सग्गाऽववायाण य, एगयरमिमं ति जं मुणइ ॥ १ ॥ पयवक्काण सच्छेयं, उदत्तअणुदत्तमा-इयन्नाणं। जं उच्चारणमणहं, एयं वा सुत्तकोसल्लं " ॥ २ ॥ इति गाथार्थः ॥ ३ ॥

अथ सूत्राभिधेयत्वादर्थस्य तत्कौशलमाह—

**अत्थे य कोसल्लं, पुण अणुवउत्ताइभासियमिणं तु। एयं उवउत्तेण, ठिएण भणियं वियाणाहि ॥ ४ ॥**

व्याख्या—सूत्रे तावदुक्तं कौशलम्। ' अर्थे ' तदभिधेये पुनरेतत्कौशलं यद् गुरुविधीयमानव्याख्यानादौ सता-

उपलक्षणं चैतत्, तेन शेषसूत्रलक्षणयोगादपीति द्रष्टव्यम् । तच्चेदम्–" पुव्वावरसंजुत्तं, वेरग्गकरं संततमविरुद्धं । पोराण-मद्धमागह–भासानियमं भवइ सुत्तं ॥ १ ॥ इति अन्वयेन प्रतिपादितोऽप्यर्थः पुनर्व्यतिरेकेण प्रतिपाद्यमानः सुदृढसंस्कार-कारणं भवतीति व्यतिरेकमाह–' एतत्तु ' एतत्पुनः श्रुति–स्मृति–प्रज्ञापारमितादिकं ' पूर्वापरबाधितं ' " न हिंस्यात् सर्व-भूतानि " इत्याद्यभिधानेऽपि पूर्वं, पश्चाद् यागादौ पशुसमालभनाद्यभिधायकत्वात् । ' तुः ' पुनरर्थो योजित एव । यस्मा-त्पूर्वापरबाधितं ' तत् ' ' तस्माद् ' जिनभाषितं नो ' नैव एतादिति । अत्रापि पूर्ववज्जिनशब्दोपादानमाप्तत्वव्यञ्जनार्थमेव, ततः कथमेवंविधं वीतरागो ब्रूयादिति निश्चिनोति । इति गाथार्थः ॥ २ ॥

किञ्च—

परवयणं वा एयं, जमित्थमासंकियं न ठिय पक्खो । जम्हा अयमहिगारो, एस तहा निग्गहो जम्हा ॥३॥

व्याख्या—' परवचनं वा ' पूर्वपक्षवादिवाक्यम् ' एतद् ' इति वा जानाति सूत्रकौशलवानिति प्रक्रमः । कुत एतद् ? इत्याह–' यद् ' यस्माद् एतस्मिन् वाक्ये ' आशङ्कितं ' निषिद्धमपि कर्तव्यतया प्रसञ्जितम् । यथा–" चेइयपूया कि वइर–सामिणा मुणियपुव्वसारेणं । कया पुरीए तइया, मुक्खंगं सा वि साहूणं " ॥ १ ॥ यदा आशङ्कितमेवैतदिति जानाति तदाऽनेनायमाशङ्कितरूपः स्थितः परसिद्धान्तप्रतिष्ठितार्थवचनलक्षणः इत्यपि जानातीति गम्यते । एतदपि कुतः ? इत्यत आह–' यस्मादयमधिकारः, ' एषोऽर्थविशेषाभिधानप्रक्रमः साधूनामसदालम्बनपरिहारेणैव विशुद्धशुद्धिसंयमः

वारिकचैत्यभक्तिनित्यवासित्वाद्यालम्बनपरिग्रहणेत्येवंरूपः। तथा
शिवाय कल्पते, न तु वैरस्वामी—सङ्गमस्थविरादिविहितबृहत्कारणिकचैत्यभक्तिनित्यवासित्वाद्यालम्बनपरिग्रहणेत्येवंरूपः। तथा कुज्जा " ॥ १ ॥
शिवाय कल्पते, न तु वैरस्वामी—सङ्गमस्थविरादि "आलंबणेण केणइ, जे अन्ने संजयं पमायन्ति। न हु तं होइ पमाणं, भूयत्थगवेसणं कुज्जा " ॥ १ ॥
च तत्रैवोक्तम्—" आलंबणेण केणइ, जे अन्ने संजयं पमायन्ति। न हु तं होइ पमाणं, भूयत्थगवेसणं कुज्जा " ॥ १ ॥

तथेति समुच्चये, निगृह्यते परवचनं निराक्रियतेऽनेनेति निग्रहः प्रत्युत्तरवाक्यम्। ततो यस्मात्कारणादेष चायं चात्र निग्रहो
निराकरणवचनम्—" उब्भावणा परेसिं सा तित्थउब्भावणं च वच्छल्लं। न गणेति गणेमाणा पुव्वुव्वियपुप्फमाहिमं च "
॥ १ ॥ ततो यद्येतत्परवचनं न स्यान्नैतस्य निग्रहः स्याद्, अस्ति चायं निग्रहः, इत्येवंरूपात्तर्कान्निश्चिनोति नूनं " चेइय-
पूया किं " इत्यादिकं परवचनमेवेति। यद्यप्यत्र तदर्थपर्यालोचनेनैव पूर्वपक्षोत्तरपक्षत्वानिर्णयः, तथापि नैतदर्थकौशलं, तद्-
द्वारेणाप्येतत्परवचनमेतदुत्तरवचनमित्येवंरूपतया सूत्रस्यैव प्राधान्येन प्रतीतेः सूत्रकौशलमेवेति। उपलक्षणं चैतत् कल्पादि-
च्छेदश्रुतोक्तानां व्यवहारनिश्चयनयस्वसमयपरसमय—संज्ञादिसूत्राणां तदुच्चारणाविधेश्च। तदुक्तम्—" सन्नाइसुत्ताण य,
अंगाणंगाइयाण वेगयरं। उस्सग्गाऽववायाण य, एगयरमिमं ति जं मुणइ ॥ १ ॥ पयवक्काण सच्छेयं, उदत्तमणुदत्तमा-
इवन्नाणं। जं उच्चाणमणहं, एयं वा सुत्तकोसल्लं " ॥ २ ॥ इति गाथार्थः ॥ ३ ॥

अथ सूत्राभिधेयत्वादर्थस्य तत्कौशलमाह—

**अत्थे य कोसल्लं, पुण अणुवउत्ताइभासियमिणं तु। एयं उवउत्तेण, ठिएण भणियं वियाणाहि ॥ ४ ॥**

व्याख्या—सूत्रे तावदुक्तं कौशलम्। ' अर्थे ' तदभिधेये पुनरेतत्कौशलं यद् गुरुविधीयमानव्याख्यानादौ सता-

स्पर्शस्तदयगमः, यश्च चाऽनुपयुक्तादिभाषितमेतदिति जानातीति योगः। तत्राऽनुपयुक्तः कार्यान्तरव्यासङ्गादिनाऽप्रणिहित-मनाः, आदिशब्दात्कषायादिदूषितास्थितादिग्रहः, स हि कदाचिद्विपर्यस्तमपि भाषते व्यासक्त्युपप्लुतचित्तत्वात्, ततश्च तेन भणितं भाषितमिदं श्रूयमाणसूत्रं 'तुः' वाक्यान्तरापेक्षया विशेषणार्थः, तेन एतत्पुनः 'उपयुक्तेन' प्रणिहितमनसा एवञ्च 'स्थितेन' कोपाद्यदूषितचेतसा भणितमिति विशेषेण जानाति, न तु मुग्धवत्संमुग्धमर्थमात्रमवबुध्यते इत्यर्थः। कौशलफलमेवमन्यत्रापि द्रष्टव्यम्। इति गाथार्थः ॥ ४ ॥

तथा—

**अविहिकया वरमकयं, असूयावयणं भणन्ति समयण्णू। पायच्छित्तं अकए, गरुयं वितहंकए लहुयं ॥५॥**

व्याख्या—'विधिः' आप्तोपदेशः, तद्विपरीतस्तु अविधिः तेन 'कृतं' विहितं चैत्यवन्दनकादिकमनुष्ठानमिति शेषः, तस्मात् 'वरं' मनाक् श्रेष्ठम् 'अकृतं' सर्वथैवाऽननुष्ठितमिति 'असूयावचनम्' इति पारिणामिकतया वक्तु-रक्षमावचनमेतदिति 'भणन्ति' प्रतिपादयन्ति, 'समयज्ञाः' सिद्धान्तरहस्यविद इत्यपि जानात्यर्थकौशलवान्। कुतः? इत्यत आह—'प्रायश्चित्तं' विशुद्धिहेतुतपःप्रभृतिकम् 'अकृते' सर्वथाऽननुष्ठिते 'गुरुकं' महत्तरम्, 'वितथकृते' किञ्चि-दविधिकृते पुनः 'लघुकम्' अल्पतरमभिहितमागमे इति गम्यते। तथाहि जीतकल्पाभिप्रायेण "फिडिए सयमुस्सारिय" इत्यत्र कथञ्चित्प्रमादेन आचार्यादेः सकाशात् प्रथममेव त्रिः कायोत्सर्गोत्सारेण वन्दनकदाने वा उत्कर्षतोऽपि चतुर्लघुक-

मेवोक्तम्; सर्वथाऽप्यकरणे तु चतुर्गुरुकमिति । ननु यद्येवं तदा कथमविधिचैत्यवन्दनामुद्दिश्य "होइ य पाएण सा किलि-
ट्ठसत्ताणं" इत्याद्युक्तम्? अविधिवन्दनकमप्युद्दिश्य "किइकम्मं पि कुणंतो, न होइ कियकम्मनिज्जराभागी" इत्याद्युक्तम्?
तस्माद् "अविधिकृतादकृतं वरम्" इत्येतन्नाऽसूयावचनं, समीचीनत्वात्; इति चेद्, नैवं, शैथिल्याऽशैथिल्यादेरिह
प्राधान्येन विवक्षितत्वात् । यत्र हि शक्तोऽपि शैथिल्यादेरविधिना करोति तत्र तत्कारणं विपरीतफलमेवेत्यत्र न विप्रति-
पत्तिः । यत्र तु सम्यक्करणकृतबुद्धिर्ग्लान्यादेरशक्तः सन् किञ्चिदविधिनाऽपि करोति तत्र तत्सफलमेव । इति आशिथि-
लादिकमाश्रित्य नाविधिकृतादकृतं वरमिति भावः । इति गाथार्थः ॥ ५ ॥

तथा—

**नरगाइ मंस-रुहिराइ,-वन्नणं जं पसिद्धिमित्तेणं । भयहेउ इहर तेसिं, वेउव्वियभावओ न तयं ॥६॥**

व्याख्या—'नरकादौ' दुर्गत्यादिस्थाने 'मांस-रुधिरादिवर्णनं' मांसाद्याशिनस्तत्र तच्छरीरोत्कर्तितपिशितादिख-
ण्डान्येव भोज्यन्ते परमाधार्मिकैरित्याद्युपदर्शनं क्रियते श्रुतधरैर्नारकाणामिति शेषः । अथवा नारकादीति उपचारात्तत्स्था
नारका एवोच्यन्ते, ततो नारकाणां मांसादीत्यादि योज्यम्; आदिशब्दाद् वसापूतादिग्रहः । एतत्सर्वं प्रसिद्धिमात्रेण धातु-
मयानि पञ्चेन्द्रियशरीराणीति सामान्यजनप्रतीत्यैव; न तु सिद्धान्तानुसारेण, यद्येवं तत्किमित्युपवर्णनम्? अत आह 'भय-
हेतोः' पिशितादिलोलानां त्रासोत्पादनार्थम् । इतरथेति प्रसिद्धिमात्रं विहाय सिद्धान्तानुसारेण पुनस्तेषां नारकाणां 'वैक्रिय-

भावाद् ' वैक्रियत्वात् । अत्र च शरीर-शरीरिणोः कथंचिदभेदाद् वैक्रियत्वाभिधानं दृश्यम् । अथवा ' वैक्रियभावाद् ' वैक्रियशरीरत्वात्तेषां ' न ' नैव तन्मांसादिकम् । इति गाथार्थः ॥ ६ ॥

तथा—

**विसयविभागेणं पुण, सुत्तं किंचि जहा उ आयारे । जुन्नं उवगरणं जह, हेमंताइक्कमे निसरे ॥७॥**

व्याख्या—साध्वाद्याचारस्य हि ' विषयो ' गोचरः साध्व्यादिः, तस्य ' विभागो ' अवान्तरविशेषः स्थविरकल्पिकादिः । ततश्च किञ्चित्पुनः सूत्रं तथाविधार्थोपदेशलक्षणं विषयविभागेनेदं स्थितमिति जानाति । तदेव सूत्रकारो दृष्टान्तार्थमाह–' यथैव ' येन प्रकारेण ' आचारे ' प्रथमाङ्गे एतदर्थं सूत्रमस्ति यदुत जीर्णं परिशाटितप्रायम्, उपक्रियतेऽनुगृह्यते संयमोऽनेनेति उपकरणम्–पात्रकल्पादिभाण्डम्, यदि चेद्भवेत् कथञ्चित्साधोस्तदा ' हेमन्तातिक्रमे ' शीतकालापगमे ' निःसृजति ' परिष्ठापयति साधुः, संयमानुपष्टम्भकत्वेन तस्याधिकरणत्वात् । तथा च तत्र प्रथमश्रुतस्कन्धाऽष्टमाध्ययनचतुर्थोद्देशकेऽभिहितम् " अह पुण एवं जाणिज्जा उवाइक्कंते खलु हेमंते, गिम्हे पडिवन्ने, अहापरिजुन्नाइं वत्थाइं परिठवेज्जा " । इति गाथार्थः ॥ ७ ॥

एवमर्थकौशलवान् विमृश्यैवंविषयविशेषे व्यवस्थितमिति निश्चिनोति । कथमित्याह—

**चोद्दस उवगरणाइं, अवस्समुचाइं ताव जं तेसिं । विसए निवडइ एयं, जिणकप्पीणं अओ तं तु ॥ ८॥**

व्याख्या—चतुर्दशसंख्यान्युपकरणानि "पत्तं पत्ताबंधो, पायट्ठवणं च पायकेसरिया, पडलाइं रयत्ताणं, गुच्छगओ तिन्नि पच्छागा ॥१॥ रयहरणं मुहपत्ती मत्तओ चोलपट्टो य"। एतानि 'अवश्यं' नियमेन 'उक्तानि' प्रतिपादितानि, तावदिति लोकभाषायां श्रुतधरैर्धार्यतयेति शेषः। 'जं तेसिं ति' यदिति यस्मात्कारणात् तेषामिति साधूनाम्। तदुक्तम्— "चोद्दस उवगरणाइं अवस्स धरियव्वाइं थेरेहिं" ति। पाठान्तरपक्षे तु तन्त्रेष्विति शास्त्रेषु निशीथादिषु, साधूनामिति तु प्रक्रमाद् गम्यते। एतदिति संप्रत्युपलभ्यमानतया प्रत्यक्षं, तदिति यदुपकरणं परिष्ठापकतयोपात्तं, 'तुः' अवधारणे, स च जिनकल्पिकानामेवेत्यत्र योज्यते। जिनकल्पिकानामवश्यं चतुर्दशोपकरणवत्त्वस्य विधानाद्धेतोस्तदेतदाचाराङ्गसूत्रं जीर्णोपकरणव्युत्सर्गप्रतिपादकं। जिनकल्पिकानामेव केवलोत्सर्गकल्पं, दुरनुष्ठेयानुष्ठानविशेषनिष्ठसाधूनामेव विषये 'निपतति' प्रवर्त्तते इति। ननु प्रत्येकबुद्धादिरेवात्र किमिति न गृह्यते, तस्यापि विषयविशेषत्वात्?। नैवम्, प्रत्येकबुद्धानां तावद् द्विविधनवविधोपकरणवत्त्वस्य जघन्योत्कर्षाभ्यामवश्यंभावित्वात्, स्वयंसंबुद्धसाधूनां तु द्वादशविधोपधित्वस्यैव प्रतिपादनात्, ततो जिनकल्पिकानामेव "दुग तिग चउक्क पणगं, नव दस इक्कारसेव बारसगं। एए अट्ठ विगप्पा, जिणकप्पे हुंति उवहिस्स" ॥ १ ॥ इत्यादिनाऽष्टविधत्वस्यापि संभवेन जीर्णकाद्युपकरणव्युत्सर्गेऽपि सिद्धान्तव्यापकभावात्तेषामेवात्र ग्रहणं युक्तमिति सूत्रं जिनकल्पिकानामेव तत्। इति गाथार्थः ॥ ८ ॥

तथा—

